शतमिति। सेयंजीवगुणस्यगतिः परायाः ऐतिकी। दशानामिंद्रियाणामंतःकरणचतुष्टयस्यचकरणस्यभेदाच्चतुर्दशसंख्याकामसंजीताअवंतिशतानिसहस्राणि
शतसहस्राणिलक्षाणिवाविषयभेदाद्भवंतितथाहिविषयभेदाहृत्तिभेदंस्फुतिराहञ्चयंवैहरयोर्यवैदशवशतानिवसहस्राणीवप्रपक्तानिचेत्यादिःआरोहणं
उपर्युपरिसोपानारोहक्रमेणऊर्द्धगतिस्तैरेवचतुर्दशभिःसत्वतारतम्यप्रधानैःकृतंतत्कृतंस्थानंचतेषुतेषुयदेषुस्थैर्यंतथानिःसरणंतेभ्यःपरेभ्यश्च्युतिस्तेषांजीवा

शतं सहस्राणिचतुर्दशेहपरागतिर्जीवगुणस्यदेव आरोहणंतत्कृतमेवविद्धिस्थानंतथानिःसरणंचतेषां ३६
कृष्णस्यवर्णस्यगतिर्निकृष्टासस्जतेनरकेपच्यमानः स्थानंतथादुर्गतिभिस्तुतस्यप्रजाविसर्गान्सुबहून्वदंति ३७

नांतत्कृतैव तस्माद्देतेचतुर्दशसात्वीकमार्गप्रवणाः कार्याइत्यर्थः ३६ अन्यथादोषमाह। कृष्णस्येति। कृष्णस्यस्थावरत्वप्रापकस्यवर्णस्यनिकृष्टानीचागतिःयतःसः
भावीस्थावरः नरकेनरकप्रदेकर्मणिसज्जते। अतोनरकेपच्यमानएवास्तेतत्रैववतस्यस्थानंस्थितिर्दुर्गतिभिःनैरेवचतुर्दशभिःदुर्मार्गप्रवृत्तैःभवति। स्थानावधिमाह
।बहूनिति। प्रजाविसर्गान्कल्पान् ३७ ॥

वहन्निःसप्यास्याशतंसहस्राणिलक्ष्मिसंपर्थ्यः हरितंपश्यन्तिर्यग्योनित्वं अनीशः दीनः शीतवातायर्दितः सर्वतोमन्तुभयदर्शीयुगक्षयेयापभोगक्षयेइदंहिवर्णि
द्वयंकेवलाभोगभूमिरेव अतोत्रभोगेनक्षपितकलुषस्यदैवात्प्राचीनपुण्यपाकपरसेतिजीवस्तपसाविवेकेनसंवृतात्माध्यासवित्तोभूत्वा ३८ सत्वगुणेनयुक्तः
सत्वबुध्यातमोगुणप्रवृत्तिंहरीकुर्वन्घटतेयततेश्रेयसेतदासत्वोत्कर्षेसतिलोहितंअष्टमअनुग्रहसर्गंउपैतिशमकामाद्याभिमानिदेवतोभावंप्राप्नोतीत्यर्थः

प१

शतंसहस्राणिततस्चरित्वाप्राप्नोतिवर्णंहरितंतुशश्वत् सचैवतस्मिन्निवसत्यनीशोयुगक्षयेतपसासंवृतात्मा ३८
सवैयदासत्वगुणेनयुक्तस्तमोव्यपोहन्घटतेस्वबुध्या सलोहितंवर्णमुपैतिनीलान्मनुष्यलोकेपरिवर्ततेच ३९
सतत्रसंहारविसर्गमेकंस्वधर्मजैर्बंधनैःक्लिश्यमानः ततः सहारिद्रमुपैतिवर्णंसंहारविक्षेपशतेनयातीते ४० ॥

सत्वापकर्षेतु नीलात्नीलत्वंप्राप्यमनुष्यलोकेपरिवर्ततेगतागतंकरोति चकारोवाशब्दस्यार्थे ३९ सः नीलत्वंप्राप्तः तत्रमानुषलोकेसंहारविसर्गंकिल्सं। वं विधि
धिनिषेधनिगडैः क्लिश्यमानः तपोबुद्धिंकुर्वाणः हारिद्रंषष्ठंसर्गंदेवत्वाभावंउपैतिततापिसंहारविक्षेपशतेकल्पशतेजातेसतिव्यतितेसतिगच्छति कर्मणिसतिहारि
तद्गतिकांसमर्थेसवीधातोरंतः यत्विष्टस्पर्द्धधातोरतिपूर्वस्येदंरूपंतथाचदेवोभूत्वामानुषत्वमुपैतिमानुषश्चभूत्वादेवत्वमुपैतीत्यर्थः ४० ॥ ॥

धनेद्

हा१

एतदेवाह हरिद्रेत्यादिना। देवः सहस्रशः कल्पान् संचरन्नपि च विप्रमुक्तो विषयवियोगहीनो निरये च संवर्त्तकृतानि कल्पे कल्पे कृतानि फलानि भुंजानो गतीः संच
रन्तिष्ठतीति पूर्वेणान्वयः गतिमेस्या दश पंच चत्वारि चेत्येकोनविंशतिसहस्राणि। अयमर्थः एकोनविंशतिमुखः प्रविविक्तभुगिति श्रुतेः स्वप्नोपमेत्स्वर्गे पिद
शेंद्रियाणि पंच प्राणाः मनआदि चतुष्टयं चेत्येकोनविंशतिर्ज्ञेयम्। हासनामया भिभोगसाधनानि वर्त्तंते तान्येव पूर्ववत्ता वंति शतानि सहस्राणि च भवंति।
तत्र दिव्योपभोगो रागहेतुत्वात् प्राप्यक्षेपकत्वादनित्यत्वाच्च निरय एवेति स्वर्गोपि निरयभोग उक्तः ततस्वर्णेनं नरं निरयात् भोगप्रदकर्मणः सकाशात् विमुक्तं

प१ प्र१

हारि स्वशक्तिप्रभवा विसर्गास्सहस्रशस्तिष्ठति संचरन्वै अविमुक्तो निरये च देवस्ततः सहस्राणि दशाप्यराणि ४१
गतीः सहस्राणि च पंच तस्य चत्वारि संवर्त्तकृतानि चैव विमुक्तमेनं निरयाच्च नि विद्धि सर्वेषु चान्येषु च संभवेषु ४२
स देवलोके विहरन्नभीक्ष्णं ततश्च्युतो मानुषतामुपैति संहारविक्षेपशतानि चाष्टौ मर्त्येषु तिष्ठत्यमृतत्वमेति ४३

के१

विद्धि स्वर्गोपि रूपवानि सर्वः अन्येष्वपि संभवेषु स्थावरतैर्यग्योनिषु मानुषवर्ज्जेषु तस्मात्तैर्यक्सर्गवद्देवसर्गोपि भोगभूमित्वान्निरय एवेति भावः ४२ अतीते दस
मार्थस्पष्टयति सदति। देवाः मानुषत्वं मानुषाश्च देवत्वं भजंत इत्यर्थः अमृतत्वं अष्टौ पूर्वोक्तानि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणचित्तमनोबुद्ध्याख्यानि ज्ञानेंद्रि
याणीह विस्तृष्टिमाश्रितस्तामेव तत्त्वविषयलपोद्धकारणानीति विषयभेदात्तान्येव शतानि सहस्राणि चालपोद्यपानमर्त्येषु प्रतिष्ठति उपैतीत्यन्वयः ४३ ॥

निष्ठा१

मो०
३१५

सोऽस्मात्संकल्पकृताद्वयोरपवर्गहात्कालः कलिस्तस्मान्योगाद्वपवश्यक्रमेणतलेतलवद्धोगतेसर्वकष्टेसवैभ्योनीवेस्यावरेति। अयमारोहाव
रोहप्रवाहपतितः सिद्ध्यतिमुच्यते ४५ मुक्त्युपायमेवाहदेवानीति। सप्तमुक्तः सप्तसहस्रशतानिदैवानिसंश्लिष्टपरक्रादिक्रमेण अंतेमुक्त एवसप्तावरान्
लोकान्संधावत्तीतिसंबंधः एकसानेकधामावोस्पृहः बुद्धेः श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणमनोबुद्धिरूपेणसप्तधाभूताधाः तत्रदिंद्रियवृत्तिभेदात्सहस्रानांश
तानिसहस्राणिवाएवंवद्भवंति तत्रदैवानिसात्विकानिशमदमादीनिएवसंश्लिष्टपथमंरक्तः शमाद्यभिमानिदेवतारूपः अतस्तत्तंशमादिमान्भवतिततो

सोस्मादथस्वश्यतिकालयोगात्क्रमेणतलेतिष्ठतिसर्वकष्टे यथात्वयंसिद्ध्यतिजीवलोकस्तन्नेभिधासाम्यम्
एवबीर ४५ दैवानिसप्तदशतानिसप्तरक्तो हरिश्चेयत्रथैवमुक्तमेतमष्टवरानर्च्यतमान्सलोकान् ४५

द्रूगहे

संस्त्समधायतिशुकर

हरिश्चेदेवस्तेयतः सक्तः कौमारोवालवेगहे सप्तस्तोभवतिततः अष्टावरानअशेषपुर्यः अवराअनुत्कृष्टाः पश्चाद्भूतावपिसुतान्सगुणात्मरूपान्लोकानअर्च
तमानथस्थ्रादिमार्गप्राप्यचंद्रलोकान् असात अर्च्यनरः अर्चिरादिमार्गप्राप्योब्रह्मलोकः ततोपिअर्च्यतमानत्तानेकप्राप्यलोकान्योगफलभूतान्सप्त
भिधानभरतीयदेहभेदे विश्वेश्वर्यकेवलप्राप्तकामइत्यादिश्रुतिप्रसिद्धंतृतीयमैश्वर्यप्राप्नोतीत्यर्थः ४५ ४५ ४५ ॥ ॥ ॥

एम०
३१५

३१८

अष्टावरणानित्संतद्व्याचष्टे अष्टौ चेति।शततशब्दार्थः प्राग्वत् अयमर्थः सप्तांगएकोनविंशतिमुखइतिजाग्रत्स्वप्नयोस्तुल्यवत् अवरणात्समस्तजा
ग्रदवस्थापंचभूतात्मकः स्थूलदेहः शब्दादिपंचकंच अस्पष्टः अंगमिवांगंस्वरूपभूतमिति अविद्यादर्पणेनमुखवत्परांक्तं प्रापितस्यस
तः प्राप्तेयएकोनविंशतिः दशेंद्रियाणिप्राणापंचकंमनोबुद्ध्यहंकारचित्तचतुष्टयंचेतितमुखानीवप्राप्तिद्वाराणि।अविद्याकामकर्मात्मिकोत्रिंश
कः संघातः जाग्रद्वत्स्वप्नेपितुल्यइति।यान्यष्टौउक्तानितान्येवषष्टीशतानीतियोजना पद्मात्वविद्यादित्रयंत्रिंशकान्तष्पगणरूपेतेनतदापिसर्वे

अष्टौ चषष्टिं चशतानियानिमनोविरुद्धानिमहाद्युतीनां शुक्लस्य
वर्णस्यपरागतिर्यात्रीणेपवरुद्धानिमहानुभाव ४६ ॥ ॥

षामाहत्याषट्षष्टिः सुषुप्तौच आनंदमुक्तेनामुखइत्युक्तेः भोगयआनंदः भोगसाधनंचेतिद्वयंचेत्यषट्षष्टिः तदा ऋ१ ज्जुतरस्यवार्थःएतानि
महाद्युतीनांपूर्णप्रकाशानामात्मविदांमनोविरुद्धानिमनसैवविशेषणरुद्धानिमूढदृष्ट्यापृथग्भूतान्यपिविदुषांमनोमात्राणेपवेत्यर्थः से
यंशुक्लस्यवर्णस्यगतिः संक्षेपेणत्रीणिजाग्रत्स्वप्नसुषुप्त्याख्यानिरुद्धानिचतत्शिवमद्वैतंचतुर्थंमन्यंतेसआत्मासविज्ञेयइतिश्रुतिप्र
सिद्धस्यतुर्यस्यप्राप्तिः एवशब्देनअपरोक्षात्मिकैवतुर्यप्राप्तिः तुर्यस्यप्रत्यक्तिनाप्राप्यत्वात् ४६ ॥ ॥ ॥ ॥
म१

एवंविदोजीवन्मुक्तस्यापिप्रारब्धकर्मभोगस्यापरिहार्यत्वमाह संहारेति एकंसंहारविक्षेपशतंअनिष्टंवसतीति।एकंभोगायारब्धंजन्मदृष्टिमस्यसमिप्र
येशालयोदपुशतात्मकंइहदेहेवसतीत्यध्याहृत्ययोज्यं। अस्यैवयोगिनः क्रममुक्तिमाह चत्वारीति। अनीशः योगैश्वर्यायस्यापितानदिव्यानभोगा
न्स्यक्तुमसमर्थोयोगीअन्यानि चत्वारिमहर्जनस्तपः सत्यलोकाख्यानियोगबल तारतम्येनरागैश्वर्यतारतम्यवतिक्रममुक्तिस्थानानिवस
तीवासनिमित्तमाहषष्ठस्येति यागतिः सत्वशुद्ध्यात्मिकातस्याः सिद्धावपिअसिद्धस्यशुद्धब्रह्मसाक्षात्कारेणाजीवन्मुक्ततामप्राप्तस्यागतक्ल

संहारविक्षेपमनिष्टमेकंचत्वारिचान्यानिवसत्यनीशः षष्ठस्यवर्गस्यपरागतिर्यासिद्धावसिद्धस्य
गतक्लमस्य ४७ सयोन्तरंतत्रवसत्यनीशः संहारविक्षेपशतंसशेषं तस्मादुपावृत्यमनुष्यलोकेत
तोमहान्मानुषतामुपैति ४८

मस्यानष्टरागादिदोषस्य योगसिद्धोपिब्रह्मात्मैक्यज्ञानात्क्रममुक्तिभागभवतीत्यर्थः ४७ योगभ्रष्टगतिमाह सयेति अनीशः सम्यग्यो
गमनुष्ठातुमशक्तः तत्रपरोक्षेत्वेनानिर्दिष्टस्वर्गलोकेसप्तपूर्वोक्तानिश्रोत्रादिपंचकंमनोबुद्धीचातानिउत्तरागिसत्वोत्कर्षबलेनउत्क्रष्ट
नियस्मिनताहशंसंहारविक्षेपशतंसशेषंकर्मशेषसहितं।ध्येयब्रह्मसाक्षात्कारेहि तथैषीकातूलमग्नौप्रोतंप्रदूयेतैवंहास्यसर्वेपाप्मानः
प्रदूयंतइतिनिःशेषपापदाहस्क्रतेः ततःप्रागारब्धयोगस्ययोगिनःकर्मशेषमस्तीतियुक्तं। शुद्धकर्मासनयोगीप्राग्योगसिद्धेर्मृतश्चेतस्तुवो
लोकेस्वलोकंचगच्छतीत्यर्थः ततश्चमानुषंजन्मप्राप्यमहानकुलशीलविद्यादिनाश्रेष्ठोभवति ४८ ॥

तस्मात् मानुषान्दिवादुपावृत्तानि क्रमपञ्च अग्रे उत्तरमुत्तरं भूतसर्गं प्रतिगंतुं संतिष्ठति प्रस्थानं करोति पूर्वाभ्यासवशादुत्तरोत्तरं योगभूमिकामारो
हतीत्यर्थः सएवं प्रतिष्ठमानः सप्तकृत्वः सप्तवारं लोकान्पर्यैति पर्यटति। संहारविक्षेपयोः समानव्युत्थानाभ्यां कृतः संवादितः प्रभावस्यैश्वर्यं येन
नसः अपवर्गः प्रथमां भूमिमारूढो योगी यतः स्वर्गं प्राप्य ततश्च्युतः सार्वभौमो राजा भवति। एवं सोयं भूलोकजयः। एवं उत्तरोत्तर योगकला

तस्मादुपावृत्य ततः क्रमेण सोऽग्रेण संतिष्ठति भूतसर्गं सप्तकृत्वश्च
पर्यैति लोकान्संहारविक्षेपकृतप्रभावः ४९ ॥ ॥ ॥ ॥

वृद्ध्या उत्तरमुत्तरं लोकं जयति अंते ब्रह्मलोकं सप्तमं प्राप्यापि पुनरावर्त्तते। यदि क्षेपवस्तुकन्यहं अहं न कुर्वीत तं कुर्वंस्तु ब्रह्मणा सहैव मुच्यते। तत्र प्रमा
णानि। प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः शुचीनां श्रीमतां गेहे योगभ्रष्टोभिजायते। तत्र तं बुद्धिसंयोगं लभते पूर्वदेहिकं यतते च ततो भूयः
संसिद्धौ कुरुनंदनेति गीता। आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुनेति च। ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे। परस्यांते कृतात्मानः प्रविशंति परं पदमि
तिच ४९ ॥ ॥

317

सप्तेतिसवशब्दोभिन्नक्रमः संहारमितिरागमुलंतंतासप्तभूरादिसत्यलोकांतानलोकान्मनोवुद्धिसहितानिज्ञानेंद्रियाणिवासंहृत्यैवबोधेनवाधित्वाजीवलो
केसंतिष्ठतिसम्यक्मोहशोकाभावादास्तेसंहारेवीजंउपलब्धवानिसंभाव्यतेषांवुद्ध्यादीनांभूरादीनांवादः स्वरूपत्वंनिश्चित्यततोदेहांतेत्र्ययपंत्र्यपरि
णामिस्थानंऋतएवानंतंत्रिविधपरिछेदशून्यंब्रह्मरातिप्राप्नोतितान्नुस्थानंकेचिद्देवस्यामहादेवस्यसंबंधिकैलासमितिवदंतिशांभवाः विष्णोर्वैकुंठमिति
वैष्णवाः ब्रह्मणाब्रह्मलोकइतिहैरणपगर्भाः शेषस्यानंतस्येतिततन्द्भक्ताः नरस्यजीवस्यैवतत्परंस्थानमितिसांख्याः देवस्यघोतमानस्यचिन्मात्र

सप्तैवसंहारमुपलब्धवानिसंभाव्यसंतिष्ठतिजीवलोके ततोऽव्ययंस्थानमनंतमेतिदेवस्यविष्णोरथब्रह्मणश्च शेष
स्यचैवाथनरस्यचैवदेवस्यविष्णोः परमस्यचैव ५॰ संहारकालेपरिदग्धकायाब्रह्माणमायांतिसदाप्रजाहि
चेष्टात्मनोदेवगणाश्चसर्वेयेब्रह्मलोकादपराः स्मृतेपि ५१

स्यविष्णोर्व्यापकस्यपरब्रह्मणः तुर्यमूर्त्तिस्वरूपस्यपरमस्येतितद्विष्णोः परमंपदमितिश्रुतिप्रसिद्धमित्यौपनिषदाः ५॰ सर्वशब्दजान्वि
कल्पानमोक्षेउपन्यस्यसर्ववादिसंमतवस्तुवक्तुमाहसंहारेति। परितः सर्वात्मनादग्धाः वोधेनभस्मीकृताः कायाः स्थूलसूक्ष्मकारणदेहाः
याभिस्ताः ब्रह्मणंब्रह्मपुरुत्वमार्षदेवगणाइंद्रियाणियेब्रह्मस्वरूपाल्लोकादपराऋर्वाचीनाः प्रकृत्यादयंस्तेपिपदिदग्धकायाः संहारकाले
मोक्षेब्रह्मप्राप्नुवंति ५१ ॥

एवमात्मबोधजमानंतिकं प्रलयमुक्त्वाऽवांतरप्रलयमाह प्रजेति प्रलयकाले आमन्वंतरे ये देवत्वं प्राप्ता अभुक्तकृत्स्नकर्मफलाः ते
पूर्वकल्पार्जितानि स्वानि स्थानानि कल्पांतरेपि सरंति लभंति सर्वेषां कल्पानां पूर्वपूर्वकल्पसादृश्यात् सूर्याचंद्रमसौ धाता यथापूर्व
मकल्पयदित्यादिश्रुतेः एवं ये तु अंते कल्पांते निःशेषतः निःशेषितकालाः ते स्वर्गनाशे इतरवन्मनुष्यत्वमेव यांति तात्पर्यः प्रलयशतेनापि
कृतं कर्म न नश्यति तत्त्वज्ञानमंतरेणेति भावः ५१ विधिं अदृष्टं पुण्यपापं तत्फलं यांति प्राप्नुवंति एकस्मिन्नपि कल्पे असकृदारोहावरोहौ
वर्त्तेते अतः संसारभीरुणा तत्त्वज्ञानमेवाश्रयणीयमिति भावः ५३ एवं सपरिकरां ब्रह्मविद्यामुक्त्वा तद्वतो दृष्टिमाह सइति स ब्रह्मवित् यो

प्रजाविसर्गं तु सशेषकाले स्थानानि स्वान्येव सरंति जीवाः निःशेषतस्तत्पदं यांति चांते सर्वे देवाये सदृशा मनुष्याः
५१ ये तु च्युताः सिद्धलोकात्क्रमेण तेषां गतिं यांति यथानुपूर्व्या जीवाः परे तद्वलतुल्यरूपाः स्वं स्वं विधिं यांति विपर्यये
ण ५३ स यावदेवास्ति सशेषभुक्ते प्रजाश्च देव्यो च तयैव मुक्ते तावत्तदंगेषु विशुद्धभावः संयम्य पंचेंद्रियरूपमे
तत् ५४ ॥

वत् सशेषभुक् शेषं प्रारब्धकर्म तत् अपरित्युज्य भुंक्ते इति सशेषभुक् अस्ति तावत् तदंगेषु तत्स्वरूपे एव प्रजाः सवह्नि भुक्ते देव्यो पराप
रविद्ये च वर्त्तेते इति शेषः ब्रह्मविदो विशुद्धकैवल्यावधिकं तत्त्वं जगदस्ति। अनंतरं नास्तीत्यर्थः। अत्र किं प्रमाणमत आह। विशुद्धभावकप
ग संशोधितचित्तो भूत्वा संयम्य धारणाध्यानसमाध्यात्मकं संयमं अनुष्ठाय परतत्र परिदृश्यमानं विपदादि पंचेंद्रियरूपमित्येव विद्धीति शेषः नत
याहि प्राणाभ्यो देवाद्देवेभ्यो लोका इति इंद्रियेभ्यः साक्षात्परं परया च देवानां लोकानां च सृष्टिः श्रूयते। स्वप्नमायेंद्रजालवदुपपद्यते चैत
त् जगतः प्रतिभासमात्रमित्युपपादितमधस्तात् ५४

उपसंहरति शुद्धामिति। शुद्धां निरविद्यां परमां गतिं शुद्धचिन्मात्रभावं शुद्धेन मनसा विचिन्वन् श्रवणमननध्यानाभ्यासैर्ज्ञातुमिच्छन् परैति है तन्ना
तं परा कल्परतिं प्राप्नोति। ततो ब्रह्मसाक्षात्कारानंतरं अव्ययं स्थानं मोक्षं उपैति यामनवत्प्राप्यत्वमस्ति ति तत आह ब्रह्मेति त्रिविधापरिछे
दशून्यं गगनस्येव प्राप्यत्वं संभवति। अपापि दुष्प्रापं अविद्यादिनाव्यवधानात् शाश्वतं नित्यप्राप्तमपि अभ्येति। कंठगतचामीकरव

शुद्धां गतिं तां परमां परैति शुद्धेन नित्यं मनसा विचिन्वन् ततोऽव्ययं स्थानमुपैति ब्रह्म दुष्प्रापमभ्येति स शाश्वतं वै ५४
इत्येतदाख्यातमहीनसत्व नारायणस्येह बलं मया ते ५५ वृत्र उवाच एवं गते मे न विषादोऽस्ति कश्चित् सम्यक्
प्रपश्यामि वचस्तवैतत् श्रुत्वा ततो वाचमदीनसत्व विकल्मषोऽस्म्यगतव्यो विपाप्मा ५६ प्रवृत्तमेतद्भगवन्मह
र्षे महाद्युतेश्चक्रमनंतवीर्य विस्तीर्णमनंतस्य सनातनं तत्स्थानं सर्गा यत्र सर्वे प्रवृत्ताः स वै महात्मा पुरुषोत्तमो
वै तस्मिन् जगत्सर्वमिदं प्रतिष्ठितं ५७ ॥

दित्यर्थः तथा चश्रुतयः ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेदहं ब्रह्मास्मीति। ब्रह्मैव सन् ब्रह्माप्येति तत्वमस्यमात्मा ब्र
ह्मेत्यादयः स्मिद्धवद्ब्रह्मभावं जीवस्योपदिशंति ५४ हे अहीनसत्व ५५ एवं उक्तप्रकारेण गते ज्ञाते मनो मात्र न्युस्थितेसति। वच
वचोऽर्थं ब्रह्माद्वैतं विकल्मषः निरविद्यः विपाप्मा शोकमोहहीनः ५६ श्रुतं विष्णुमाहात्म्यमनुसंधत्ते प्रवृत्तमिति सार्द्धेन ५७ ॥

एवमितिइंद्रेणसहपुष्पन्नत्रांतकालेप्रवृत्तमेतदित्यादिसार्द्धश्लोकेनविभुमनुसंधायआत्मानंब्रह्मणियोजयित्वा ५८ अयंसइतिपुरोवर्त्तिनि
कृष्णेअत्रअंगुल्यानिर्दिशति।श्रीकृष्णएवसर्वशास्त्रप्रतिपाद्यइत्यर्थः ५९ राजवन्मूर्त्तिमानतत्वस्यईश्वरइतियुधिष्ठिरस्यभ्रमोमाभूदिति
भीष्मउवाचमूलेति।मूलंअधिष्ठानंतद्वत्त्वविकारेणरूपेणतिष्ठतीतिमूलस्थायीयोधिष्ठानचिद्रूपःसमहादेवोमहानचिदात्मामायानिष्कृष्टो

भीष्मउवाच एवमुक्त्वासकौंतेयवृत्रःप्राणानवासृजत् योजयित्वातथात्मानंपरंस्थानमवाप्तवान् ५८ युधि
ष्ठिरउवाच अयंसभगवान्देवःपितामहजनार्दनः सनत्कुमारोवृत्राययत्तदाख्यातवान्पुरा ५९ भीष्मउवाच
मूलस्थायीमहादेवोभगवान्स्वेनतेजसा तत्स्थःसृजतितान्भावान्नानारूपान्महामनाः ६० ६० ६०

मूलस्थानीयःप्रथमःसएवमायाशवलोभगवान्षड्विधैश्वर्यवान्कारणात्माभवतिबीजस्थानीयःशिवदचिदुभयात्माद्वितीयःसोपिस्वेनस्व
कीयेनतेजसाउपलक्षितःतेजसाख्यकार्यब्रह्मतांप्राप्तस्तृतीयोवृक्षस्थानीयोभवति तत्स्थःतस्मिन्ब्रह्मांडरूपेकार्येतिष्ठन्नयंश्रीकृष्णत्र
नेकबीजगर्भफलस्थानीयश्चतुर्थःतान्भावान्कार्यकारणरूपान्वृक्षबीजाभान्सृजतिमहामनाःमहत्परिच्छेदाभिमानशून्यंसत्यसंक
ल्पादिगुणकंमनोयस्यसतथा ६० ६०

अस्यास्तु समाहतुरीयेति तस्य मूलस्यापि नश्चिन्मात्रस्य तुरीयार्द्धेन अष्टमांशेन तिष्ठन्तं इमं मूर्त्तिमन्तं केशवं विद्धि अच्युतमिति मूर्त्तिमत एव यावदविघं नित्यत्व
मुक्तं । तथाहि मूलस्यापि परां चैतन्ये भगवति मायांशस्य सत्त्वप्राधान्याद्‌द्वैतेजसेत्वाविघके समष्टिकार्यवीजोसस्यार्द्धस्यैव सत्त्वात्तुरीयांशश्चैतन्यस्याभि
व्यष्टिकार्यपरिछिन्ने देहाद्यभेदाभिमानात् अष्टमांशश्चैतन्यस्यास्ति तदिदमुक्तं तुरीयार्द्धेन तस्येयं विद्धीति नन्वेवमस्मदादितुल्यत्वमेवास्यमिति तत्तु दृ
श्यत्व अयं स भगवानिति युधिष्ठिरोक्तिरयुक्ता उपाध्यंशाविवक्षायां तस्मात्कमपि तथात्वमस्तीत्याशंक्याह तुरीयार्द्धेनेति पूर्वोक्तरीत्या कूष्मपक्वफला
भेईशादिस्वष्टुत्वं युक्तं । अपक्वफलाभेष्वस्मासु त्वनीशत्वं स्फुटमिति नेतेन महास्माकं साम्यप्रसंगः ८१ एतदेव कार्यकारणयोर्लयप्रतिपादनेन



तुरीयार्द्धेन तस्येमं विद्धि केशवमच्युतं तुरीयार्द्धेन लोकांस्त्रीन्भावयत्येव बुद्धिमान् ८१ अर्वाक्स्थि
तस्तु यः स्थायी कल्पांते परिवर्त्तते सशेते भगवानप्सु योसावतिबलः प्रभुः तान्विधात्मा प्रसन्नात्मा लो
कांश्चरति शाश्वतान् ८२

द्रष्टयति । अर्वागिति सार्द्धेन अर्वाक्स्थितः स्थायी समष्टिकार्यात्मा तृतीयः अस्मदादिशरीरापेक्षया निम्नोपि कल्पांते परिवर्त्तते नश्यतीत्यर्थः
यस्तु भगवान्द्वितीयोऽतिबलोनेकब्रह्मांडलयादकृपवीजभूतः प्रभुरंतर्यामी सोपि अप्सु आपइवापः स्तासु सलिलएकोद्रष्टाऽद्वैतो भवतीति श्रु
त्याः पारावारवर्जितसलिलाभत्वेन निरूपिते अखंडैकरसे ब्रह्मणि शेते लीयते ईश्वरस्यास्य नियंतृत्वं च वहोपेक्षयैवोच्यते न तु परमार्थत इति नत
त्त्वयोक्तिरसंगता । तानिति अनुवाघमयस्य वहुत्वं विषयलोकापेक्षं पुंस्त्वं चातं अखंडैकरसं लोकं आत्मानं शाश्वतं नित्यं प्राप्त एव विधाता चतु
र्मुखः प्रसन्नात्मा शुद्धचित्तः सन् अविद्यापनयमात्रेण चरति गच्छति प्राप्नोति ब्रह्मादीनां चेतनानामपि तदेव लयस्थानमित्यर्थः ८२ ॥

सोपंश्चनंतः परमात्मा सर्वाणि कार्याणि कारणानि च अभूत्वानि स्वसत्तास्फूर्त्तिप्रदानेन भूतानि करोति सनातनः सर्वदैक रूपोपिमायिकोउपाधिविशिष्टेन रूपेणाष्टाक स्वात्मना लोकान् संचरते च। स एवंभूतोप्यसदादिवहुपाधिधर्मैर्ज्ञानिरुध्यते तोऽनिरुद्धे हंकारः सन् जगत्सृजते महात्मा सर्वाधारत्वयोग्यः तथा च श्रुतिः अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धइति स्मृत्युर्नोपि सन्निरुद्धादस्मात्त्वमाहतत्त्वं वीजेनहरिवफलेवीजानीव परमात्मनि हृत्स्थे सर्वं जगदस्ति तथा च श्रुतिः हिरण्यश्मश्रुर्हिरण्यकेशइति विभ्र

सर्वाणि अभूत्वानि करोत्यनंतः सनातनः संचरते च लोकान् स चानिरुद्धः सृजते महात्मा तत्स्थं जगत्सर्वमिदं विचि त्रं ६३ युधिष्ठिर उवाच हत्रेण परमार्थज्ञ दृष्टा मन्येत्मनो गतिः शुभा तस्मात्सुखितो न शोचति पितामह ६४ शुक्लः शुक्लाभिजातीयः साध्यो नावर्त्तते नघ तिर्यग्गते श्च निर्मुक्तो निरयाच्च पितामह ६५ ॥ ॥ ॥

त्वभवितमीश्वरमुपदिश्य इयमेव गतिः सामेत्युक्तम्। आत्मनानिरूपितं प्रपंचं तस्य कर्मसामर्थ्यं चोक्त्वाविततं इं गुलिपर्वणेन निर्दिशति अतस्तत्स्थं जगत् रंगं गातरंगत्यायेन युक्तं ६३ एवं ब्रह्मविद्यां श्रुत्वा तत्र स्वस्याधिकारोस्तिनास्ति वेति संदिहानः पृच्छति हत्रेणेति त्मनः आत्मनः तस्मात् आत्मागतिदर्शनात् ६४
शुक्लाभिजातीयः शुक्लवंश्यः। साध्यः साध्यसंज्ञको देवोइति नाऽवर्त्तते ६५ ॥

मो०
३२०

हारिद्रवर्णो सत्वाधिक्ये तमःसाम्ये रजसोल्पत्वे च षष्ठे देवतासर्गे उक्तो तत्र पारक्ते रजसआधिक्ये सत्वस्य साम्ये तमसोल्पत्वे च मध्यमे तु अनुग्रहसर्गे च वर्त्तमानः तमोरज
सोः साम्ये तु कदाचिद्दावरस्य प्रवृत्ते वर्द्धिउद्रेकः स्यात्तेन न ततस्तिर्यग्गतिः संभाव्येत ६६ वर्णं तु हारिद्रात्च्युताः केवले रजःप्रधाने रक्ते वर्त्तमानाः नीलां मा

320

हारिद्रवर्णो रक्तो वा वर्त्तमानस्तु पार्थिव तिर्यग्गेवानुपश्येत कर्मभिस्तामसैर्वृतः ६६ वर्णं तु भृशमापन्नो रक्तो दुः
खसुखे वसुरेवकां गतिं प्रतिपत्स्यमानो नीलं लोकं स्माधमामय ६७ भीष्म उवाच शुद्धाभिजनसंपन्नाः पांडवाः
शंसितव्रताः विहृत्य देवलोकेषु पुनर्मानुषमेष्यथ ६८ शांतौ मोक्षधर्मेषु वृत्रगीता समाप्ता॥ ॥युधिष्ठिर
उवाच अहो धर्मिष्ठता तात वृत्रस्यामिततेजसः यस्य विज्ञानमतुलं विष्णोर्भक्तिश्च तादृशी १ दुर्विज्ञेयं
पदं तात विष्णोरमिततेजसः कथं वा राजशार्दूल पदं तज्ज्ञातवानसौ २ ॥ ॥ ॥ ॥

नुषीं वा कस्मात्ततोऽप्यधमां तिर्यग्गतिं वा कृस्नया सहितामधमां कृस्नाधमां ६७ एवं भीतं युधिष्ठिरमाश्वासयति शुद्धेति इह पांडवाः स्वयं संपन्नाः स्थ ६८ सिद्ध
संख्यां सिद्धेषु गणनां ६९ इति नैलकंठीये भारतभावदीपे शांतौ मोक्षधर्मेषु वृत्रगीतार्थप्रकाशः पंचाधिकशततमः अहो १ पदं स्थानं पदं पदनीयं
२ २ ॥ ॥

राम०
३२०

वृत्रवधस्यापेक्षत्वदर्शिसिश्रद्धाचैवेत्सवसत्वृत्रस्यवधानर्हत्वंचेतिविरुद्धकोटिद्वयेनव्यक्तसंशयः अन्यतरकोटिनिश्चायकंदर्शनंव्यक्तदर्शनंतदभावात् अव्यक्त दर्शनात्

भवताकथितंह्येतच्छ्रद्दधेचाहमच्युत भूयस्तुमेसमुत्पन्नाबुद्धिरव्यक्तदर्शनात् ३ कथंविनिहतोवृत्रःशक्रेणपुरुषर्षभ
धर्मिष्ठोविष्णुभक्तश्चतत्वज्ञश्चपदान्वये ४ एतन्मेसंशयंब्रूहिपृच्छतेभरतर्षभ वृत्रस्तुराजशार्दूलयथाशक्रेणनिर्जितः ५
यथाचैवाभवद्युद्धंतच्चाचक्ष्वपितामह विस्तरेणमहाबाहोपरंकौतूहलंहिमे ६ भीष्मउवाच रथेनेंद्रःप्रयातोवैसार्द्धंदेव
गणैःपुरा ददर्शाथाग्रतोवृत्रंधिष्ठितंपर्वतोपमं ७ योजनानांशतान्यूर्द्ध्वंपंचोच्छ्रितमरिंदम शतानिविस्तरेणाथत्रीण्येवा
भ्यधिकानिवै ८ तत्प्रेक्ष्यतादृशंरूपंत्रैलोक्येनापिदुर्जयं वृत्रस्यदेवाःसंत्रस्तानशांतिमुपलेभिरे शक्रस्यतुतदारा
जन्नूरुस्तंभोव्यजायत भयाद्वृत्रस्यसहसादृष्ट्वातद्रूपमुत्तमं १० ततोनादःसमभवद्वादित्राणांचनिस्वनः देवासुरा
णांसर्वेषांतस्मिन्युद्धेह्युपस्थिते ११ अथवृत्रस्यकौरव्यदृष्ट्वाशक्रमवस्थितं नसंभ्रमोनभीःकाचिदास्थावासम
जायत १२ ततःसमभवद्युद्धंत्रैलोक्यस्यभयंकरं शक्रस्यचसुरेंद्रस्यवृत्रस्यचमहात्मनः १३ असिभिःपट्टिशैःशूलैः
शक्तितोमरमुद्गरैः शिलाभिर्विविधाभिश्चकार्मुकैश्चमहास्वनैः ॥

३ पदान्वयेवेदांतवाक्यार्थविचारे १० ११ ११ ॥ ॥ ॥

शस्त्रैश्चविविधैर्दिव्यैः पावकोल्काभिरेवच देवासुरैस्ततः सैन्यैः सर्वमासीत्समाकुलं १५ पितामहपुरोगाश्चसर्वेदेवगणास्तथा
ऋषयश्चमहाभागास्तद्युद्धंद्रष्टुमागमन् १६ विमानाग्र्यैर्महाराजसिद्धाश्चभरतर्षभ गंधर्वाश्चविमानाग्र्यैरप्सरोभिः समागम
न् १७ ततोन्तरिक्षमावृत्य वृत्रो धर्मभृतांवरः अश्मवर्षेणदेवेंद्रंसमाकिरदतिद्रुतं १८ ततोदेवगणाः क्रुद्धाः सर्वतः शरवृष्टि
भिः अश्मवर्षमपोहंतवृत्रप्रेरितमाहवे १९ वृत्रस्तुकुरुशार्दूलमहामायोमहाबलः मोहयामासदेवेंद्रंमायायुद्धेनसर्व
शः २० तस्यवृत्रार्दितस्याथमोहआसीच्छतक्रतोः रथंतरेणतंतत्रवसिष्ठः समबोधयत् २१ वसिष्ठउवाच देवश्रेष्ठोसि
देवेंद्रदैत्यासुरनिबर्हण त्रैलोक्यबलसंयुक्तः कस्माच्छक्रविषीदसि २२ एषब्रह्माचविष्णुश्चशिवश्चैवजगत्पतिः सोम
श्चभगवान्देवः सर्वेचपरमर्षयः २३ माकार्षीः कश्मलंशक्रकश्चिदेवेतरोयथा आर्यांयुद्धमतिंकृत्वाजहिशत्रून्सुरा
धिप २४ एषलोकगुरुस्त्र्यक्षः सर्वलोकनमस्कृतः निरीक्षतेत्वांभगवांस्त्यजमोहंसुराधिप २५ एतेब्रह्मर्षयश्चैवबृह
स्पतिपुरोगमाः स्तवेनशक्रदिव्येनस्तुवंतित्वांजयायवै २६ भीष्मउवाच एवंसंबोध्यमानस्यवसिष्ठेनमहात्मना अतीववा
सवस्यासीद्बलमुत्तमतेजसः २७ ततोबुद्धिमुपागम्यभगवान्पाकशासनः योगेनमहतायुक्तस्तांमायांव्यपकर्षत २८ ततो
गिरःसुतः श्रीमांस्तेचैवसुमहर्षयः दृष्ट्वावृत्रस्यविक्रांतमुपागम्यमहेश्वरं २९ ऊचुर्वृत्रविनाशार्थंलोकानांहितकाम्यया ततो

वतस्तेजोज्वरोभूत्वाजगत्ततः समाविशन्महारौद्रंवृत्रंदैत्यवरंतदाविस्मुश्चभगवान्देवः सर्वलोकाभिपूजकः रेन्द्रंसमावि
शद्वज्रंत्रैलोकसंरक्षणेरतः ३० ततोबृहस्पतिर्धीमानुपागम्यशतक्रतुं वसिष्ठश्चमहातेजाः सर्वेचपरमर्षयः ३१ तेसमा
साद्यवरदंवासवंलोकपूजितं ऊचुरेकाग्रमनसोजहिवृत्रमितिप्रभो ३२ महेश्वरउवाच एषवृत्रोमहाञ्छक्रबले
नमहतावृतः विश्वात्मासर्वगश्चैवबहुमायश्चविश्रुतः ३३ तदेनमसुरश्रेष्ठंत्रैलोक्येनापिदुर्जयं जहित्वंयोगमास्था
यमावमंस्थाःसुरेश्वर ३४ अनेनहितपस्तप्तंबलार्थममराधिप षष्टिंवर्षसहस्राणिब्रह्माचास्मैवरंददौ ३५ महत्वं
योगिनांचैवमहामायत्वमेवच महाबलत्वंचतथातेजश्चाग्र्यंसुरेश्वर ३६ एतत्त्वांमामकंतेजःसमाविशतिवासव
व्यग्रमेनंत्वमप्येनंवज्रेणजहिदानवं ३७ शक्रउवाच भगवंस्त्वत्प्रसादेनदितिजंसुदुरासदं वज्रेणनिहनिष्यामि
पश्यतस्तेसुरर्षभ ३८ भीष्मउवाच आविश्यमानेदैत्येतुज्वरेणाथमहासुरे देवतानामृषीणांचहर्षान्नादोमहानभू
त् ३९ ततोदुंदुभयश्चैवशंखाश्चसुमहास्वनाः मुरजाडिंडिमाश्चैवप्रावाद्यंतसहस्रशः ४० असुराणांतुसर्वेषांस्मृ
तिलोपोमहानभूत् मायानाशश्चबलवान्क्षणेनसमपद्यत ४१ तथाविष्टमथोज्ञात्वाऋषयोदेवतास्तथा स्तुवंतःश
क्रमीशानंतथाप्राचोदयन्नपि ४२ रथस्थस्यहिशक्रस्ययुद्धकालेमहात्मनः ऋषिभिःस्तूयमानस्यरूपमासीत्सुदुर्द
र्शं ४३ शांतौमोक्षधर्मेषुवृत्रवधे भीष्मउवाच २ ॥ ॥

अस्य तु महाराज ज्वराविष्टस्य सर्वशः अभवन्यानि लिंगानि शरीरे तानि मे शृणु १ ज्वलितास्योभवद्घोरो वैवर्ण्यं चागमत्परं॥
गात्रकं[illegible]पश्च सुमहान्श्वासश्चाप्यभवन्महान् २ रोमहर्षश्च तीव्रोभून्निश्वासश्च महान्नृप शिवा चाशिवसंकाशा तस्य वक्त्रा
त्सुदारुणा ३ निष्पपात महाघोरा स्मृतिः सा तस्य भारत उल्काश्च ज्वलितास्तस्य दीप्ताः पार्श्वे प्रपेदिरे ४ गृध्राः कंका
बलाकाश्च वाचो मुंचन्सुदारुणाः वृत्रस्योपरि संहृष्टाश्चक्रवत्परिबभ्रमुः ५ ततस्तं रथमास्थाय देवाप्यायित आहवे
वज्रोद्यतकरः शक्रस्तं दैत्यं समवैक्षत ६ अमानुषमथो नादं स मुमोच महासुरः व्यजृंभत च राजेंद्र तीव्रज्वरसमन्वितः
७ अथास्य जृंभतः शक्रस्ततो वज्रमवासृजत् स वज्रः सुमहातेजाः कालाग्निसदृशोपमः ८ क्षिप्रमेव महाकायं
वृत्रं दैत्यमपातयत् ततो नादः समभवत्पुनरेव समंततः ९ वृत्रं विनिहतं दृष्ट्वा देवानां भरतर्षभ वृत्रं तु हत्वा मघवान्
दानवारिर्महायशाः १० वज्रेण विष्णुयुक्तेन दिव[illegible]मेव समाविशत् अथ वृत्रस्य कौरव्य शरीरादभिनिः
सृता ११ ब्रह्मवध्या महाघोरा रौद्रा लोकभयावहा करालदशना भीमा विकृता कृष्णपिंगला १२ प्रकीर्णमूर्द्धजा चैव
घोरनेत्रा च भारत कपालमालिनी चैव कृत्येव भरतर्षभ १३ रुधिरार्द्रा च धर्मज्ञ चीरवल्कलवासिनी साभिनिष्क्रम्य
राजेंद्र तादृग्रूपा भयावहा १४ वज्रिणं मृगयामास तदा भरतसत्तम ॥

कस्यचित्त्वथ कालस्य वृत्रहा कुरुनंदन १५ स्वर्गायाभिमुखः प्रायाल्लोकानां हितकाम्यया साविनिः सरमाणां तु दृष्ट्वा र
क्तं महौजसं १६ जग्राह वध्यो देवेंद्रं सुलग्ना चाभवत्तदा सहितस्मिन्समुत्पन्ने ब्रह्मवध्याकृतं भये १७ नलिन्या विसम
ध्यस्थ उवास द्वरगणान्वहून अनुसृत्य तु पत्नात्स्मन्त पावे ब्रह्महत्यया १८ तत्रा गृहीतः कौरव्य निस्तेजाः समपद्य
त तस्या व्यपोहने शक्रः परं यत्नं चकार ह १९ न चाशकत्ततो देवेंद्रो ब्रह्मवध्यां व्यपोहितुं गृहीत एव तु तया देवेंद्रो भर
तर्षभ २० पितामहमुपागम्य शिरसा प्रत्यपूजयत् ज्ञात्वा गृहीतं शक्रं स द्विजप्रवरवध्यया २१ ब्रह्मा संचिंतयामा
स तदा भरतसत्तम तामुवाच महावाहो ब्रह्मवध्यां पितामहः २२ स्वरे रामधुरे राथ्य सांत्वयन्निव भारत मुच्यतां त्रिद
शेंद्रो यं मत्प्रियं कुरु भाविनि २३ ब्रूहि किं ते करोम्यद्य कामं किं त्वमिहेच्छसि ब्रह्मवध्योवाच त्रिलोकपूजिते देवे प्री
ते त्रैलोक्यकर्त्तरि कृतमेवेह मन्यामि निवासं तु विधत्स्व मे २५ त्वया कृतेयं मर्यादा लोकसंरक्षणार्थिना स्थापना
वै सुमहती त्वया देव प्रवर्त्तिता २६ प्री

मो०
३२२

325

तेतुत्वपिधर्मज्ञसर्वलोकेश्वरप्रभो शक्रादघंगमिष्यामिनिवासंसंविधत्स्वमे २७ भीष्मउवाच तथेतितांप्राहतदाब्रह्म
वध्यांपितामहः उपायतःसशक्रस्यब्रह्मवध्यांव्यपोहत २८ ततःस्वयंभुवाध्यातस्तत्रवह्निर्महात्मना ब्रह्माणामुपसं
गम्यततोवचनमब्रवीत २९ प्राप्तोस्मिभगवन्देवत्वत्सकाशमनिंदित यत्कर्त्तव्यंमयादेवतत्त्वंवान्वक्तुमर्हसि ३०
ब्रह्मोवाच बहुधाविभजिष्यामिब्रह्मवध्यामिमामहं शक्रस्याघविमोक्षार्थंचतुर्भागंप्रतीच्छवै ३१ अग्निरुवाच
मममोक्षस्यकोंतोवैब्रह्मन्ध्यापस्वैवप्रभो एतदिच्छामिविज्ञातुंतत्त्वतोलोकपूजित ३२ ३२ ३२ ३२

राम०
३२३

यस्त्वामितितियः आहिताग्निरधिकारी वीजैः पुरोडाशादिना ओषधिरसैः सोमेनपयआदिभिः ३३ ३६ ३७ ४० ४१ ४४ ॥

ब्रह्मोवाच यस्त्वांज्वलंतमासाद्यस्वयंवैमानवःक्वचित् वीजौषधिरसैर्वह्निनयक्ष्यतितिमोहतः ३३ तमेषाया
स्यतिक्षिप्रंतत्रैवचनिवत्स्यति ब्रह्मवध्याहव्यवाहव्येतुतेमानसोज्वरः ३४ इत्युक्तःप्रतिजग्राहतद्वचोहव्यक
व्यभुक् पितामहस्यभगवांस्तथाचतदमूतप्रभो ३५ ततोवृक्षौषधितृणांसमाहूयपितामहः इममर्थंमहाराज
वक्तुंसमुपचक्रमे ३६ ततोवृक्षौषधितृणांतथैवोक्तंयथातथं व्यथितंवह्निवद्राजन्नेवब्रह्माणमिदमब्रु
वीत् ३७ अस्माकंब्रह्मवध्यायाःकोंतोलोकपितामह देवेनाभिहतानस्मान्नपुनर्हंतुमर्हसि ३८ वय
मग्निंतथाशीतंवर्षंचपवनेरितं सहामःसततंदेवतथाछेदनभेदने ३९ ब्रह्मवध्यामिमामद्यभवतःशास
नाद्वयं ग्रहीष्यामस्त्रिलोकेशमोक्षंचिंतयतांभवान् ४० ब्रह्मोवाच पर्वकालेतुसंप्राप्तेयोवैछेदनभेदनं
करिष्यतिनरोमोहात्तमेषानुगमिष्यति ४१ भीष्मउवाच ततोवृक्षौषधितृणामेवमुक्तंमहात्मना ब्रह्माणमभि
संपूज्यजग्मुराशुयथागतं ४२ आहूयाप्सरसोदेवस्ततोलोकपितामहः वाचामधुरयाप्राहसांत्वयन्निवभारत
४३ इयमिंद्रादनुप्राप्ताब्रह्मवध्यावरांगनाः चतुर्थमस्याभागांशंमयोक्ताःसंप्रतीच्छथ ४४ ॥ ॥ ॥

अमरसऊचुः अहरोऽकृतबुद्धीनांदेवेशतवशासनात् मोक्षंसमपतोस्माकंचिंतयस्वपितामह ४५ ब्रह्मोवाच रजस्व
लासुनारीषुयोवैमैथुनमाचरेत् तमेषायास्यतिक्षिप्रंव्येतुवोमानसोज्वरः ४६ भीष्मउवाच तथेतिहृष्टमनसइत्युक्त्वा
प्सरसांगणाः स्वानिस्थानानिसंप्राप्यरेमिरेभरतर्षभ ४७ ततस्त्रिलोककृद्देवः पुनरेवमहातपाः अपः संचिंतया
मासध्यातास्ताश्चाप्यथागमन् ४८ तास्तुसर्वाःसमागम्यब्रह्माणममितौजसं इदमूचुर्वचोराजन्प्रणिपत्यपितामहं
४९ इमाःस्मदेवसंप्राप्तास्त्वत्सकाशमरिंदम शासनात्तवलोकेशसमाज्ञापयनःप्रभो ५० ब्रह्मोवाच इयं
वृत्रादनुप्राप्तापुरुहूतंमहाभया ब्रह्मवध्याचतुर्थांशमस्याःयूयंप्रतीच्छत ५१ आपऊचुः एवंभवतुलोकेश
यथावदसिनःप्रभो मोक्षंसमपतोस्माकंसंचिंतयितुमर्हसि ५२ त्वंहिदेवेशसर्वस्यजगतःपरमागतिः कोन्यः
प्रसादोहिभवेद्यन्नःकृच्छ्रात्समुद्धरेत् ५३ ब्रह्मोवाच अल्पाइतिमतिंकृत्वायोनरोबुद्धिमोहितः श्लेष्ममूत्रपु
रीषाणियुष्मासुप्रतिमोक्ष्यति ५४ तमियंयास्यतिक्षिप्रंतत्रैववचनिवत्स्यति तथावोभवितामोक्षइतिसत्यंब्रवीमि
वः ५५ ॥ ॥

ब्रह्मविदांवधःइंद्रस्यापिचअंसंनदुःखदःलोकनाशहेतुश्चभवतीत्यध्यायतात्पर्यं ६५ सप्ताधिकशततमः ॥ पितामह २

ततोविमुच्यदेवेंद्रंब्रह्महत्यायुधिष्ठिर यथाविसृष्टंतंवासमगमद्देवशासनात् ५६ एवंशक्रेणसंप्राप्ताब्रह्महत्या
जनाधिप पितामहमनुज्ञाप्यसोश्वमेधमकल्पयत् ५७ श्रूयतेचमहाराजसंप्राप्तावासवेनवै ब्रह्महत्याततःशुद्धिंह
यमेधेनलब्धवान् ५८ समवाप्यश्रियंदेवोहत्वारीश्चसहस्रशः प्रहर्षमतुलंलेभेवासवःपृथिवीपते ५९ वृत्र
स्यरुधिराच्चैवशिखंडाःपार्थजज्ञिरे द्विजातिभिरभक्ष्यास्तेदीक्षितैश्चतपोधनैः ६० सर्वावस्थंत्वमप्येषांद्विजाती
नांप्रियंकुरु इमेहिभूतलेदेवाःप्रथिताःकुरुनंदन ६१ एवंशक्रेणकौरव्यबुद्धिसौक्ष्म्यान्महासुरः उपायपूर्वं
निहतोवृत्रोह्यमिततेजसा ६२ एवंत्वमपिकौंतेयपृथिव्यामपराजितः भविष्यसियथादेवःशतक्रतुरमित्रहा
६३ येतुशक्रकथांदिव्यामिमांपर्वसुपर्वसु विप्रमध्येवदिष्यंतिननतेप्राप्स्यंतिकिल्बिषं ६४ इत्येतद्वृत्रमाश्रित्य
शक्रस्यात्यद्भुतंमहत् कथितंकर्मतेतातकिंभूयःश्रोतुमिच्छसि ६५ शांतौमोक्षधर्मेषुवृत्रवधःसमाप्तः ॥ ॥
युधिष्ठिरउवाच पितामहमहाप्राज्ञसर्वशास्त्रविशारद अस्मिन्वृत्रवधेदेवविवक्षाममजायते १ ज्वरेणमोहि
तोवृत्रःकथितस्तेजनाधिप निहतोवासवेनेहवज्रेणेतितदानघ २ ॥

मो० प्रसंगात्ज्वरोत्पत्तिं पृछतिपितामहेत्यादिना ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४



कथमेषमहाप्रज्ञज्वरःप्रादुरभीकुतः ज्वरोत्पत्तिंनिपुणतःश्रोतुमिछाम्यहंप्रभो ३ भीष्मउवाच शृणुराजन्ज्वरस्येमंसंभवं लोकविश्रुतं विस्तरंचास्यवक्ष्यामियादृशश्चैवभारत ४ पुरामेरोर्महाराजशृंगंत्रैलोक्यपूजितं ज्योतिष्कंनामसावित्रं सर्वरत्नविभूषितं ५ अप्रमेयमनाधृष्यंसर्वलोकेषुभारत तत्रदेवोगिरितटेहेमधातुविभूषिते पर्यंकइवविभ्राजन्नुप विष्टोवभूवह ६ शैलराजसुताचास्यनित्यंपार्श्वेस्थितावभौ तथादेवामहात्मानोवसवश्चामितौजसः ७ तथैव चमहात्मानावश्विनौभिषजांवरौ तथावैश्रवणोराजागुह्यकैरभिसंवृतः ८ यक्षाणामीश्वरःश्रीमान्कैलासनिल यःप्रभुः उपासंतमहात्मानमुशनाचमहामुनिः ९ सनत्कुमारप्रमुखास्तथैवचमहर्षयः अंगिरःप्रमुखाश्चैवतथादे वर्षयोपरे १० विश्वावसुश्चगंधर्वस्तथानारदपर्वतौ अप्सरोगणसंघाश्चसमाजग्मुरनेकशः ११ ववौसुखःशि वोवायुर्नानागंधवहःशुचिः सर्वर्तुकुसुमोपेताःपुष्पवंतोद्रुमास्तथा १२ तथाविद्याधराश्चैवसिद्धाश्चैवतपोध ना महादेवंपशुपतिंपर्युपासंतभारत १३ भूतानिचमहाराजनानारूपधराण्यथ राक्षसाश्चमहारौद्राःपिशाचा श्चमहाबलाः १४

वहरूपधराहष्टानानाप्रहरणोद्यताः देवस्यानुचरास्तत्रतस्थिरेचानलोपमाः १५ नंदीचभगवांस्तत्रदेवस्यानुमतेस्थितः
प्रगृह्यज्वलितंशूलंदीप्यमानःस्वतेजसा १६ गंगाचसरितांश्रेष्ठासर्वतीर्थजलोद्भवा पर्युपासततंदेवंरूपिणीकुरु
नंदन १७ सएवंभगवांस्तत्रपूज्यमानःसुरर्षिभिः देवैश्चसुमहातेजामहादेवोव्यतिष्ठत १८ कस्यचित्त्वथकाल
स्यदक्षोनामप्रजापतिः पूर्वोक्तेनविधानेनयक्ष्यमाणोन्वपद्यत १९ ततस्तस्यमखंदेवाःसर्वेशक्रपुरोगमाः गम
नायसमागम्यबुद्धिमापेदिरेतदा २० तेविमानैर्महात्मानोज्वलनार्कसमप्रभैः देवस्यानुमतेगच्छन्गंगाद्वारमिति
श्रुतिः २१ प्रस्थितादेवतादृष्ट्वाशैलराजसुतातदा उवाचवचनंसाध्वीदेवंपशुपतिंपतिं २२ भगवन्क्वनुयान्त्येते
देवाःशक्रपुरोगमाः ब्रूहितत्त्वेनतत्त्वज्ञसंशयोमेमहानयं २३ महेश्वरउवाच दक्षोनाममहाभागेप्रजानांपतिरु
त्तमः हयमेधेनयजतेतत्रयांतिदिवौकसः २४ उमोवाच यज्ञमेतंमहादेवकिमर्थंनाधिगच्छसि केनवाप्रतिषेधे
नगमनंतेनविद्यते २५ महेश्वरउवाच सुरैरेवमहाभागेपूर्वमेतदनुष्ठितं यज्ञेषुसर्वेषुममनभागउपकल्पितः २६
पूर्वोपायोपपन्नेनमार्गेणवरवर्णिनि नमेसुराःप्रयच्छंतिभागंयज्ञस्यधर्मतः २७ उमोवाच भगवन्सर्वभूतेषुप्रभा
वाभ्यधिकोगुणैः अजय्यश्चाप्यधृष्यश्चतेजसायशसाश्रिया २८ अनेनतेमहाभागप्रतिषेधेन ॥ ॥

भागतः अतीवदुःखमतुलंत्वेवेपथुश्चममानघ २९ भीष्मउवाच एवमुक्त्वातुसादेवीदेवंपशुपतिंपतिं तूष्णींभूताभ
वद्राजन्दह्यमानेनचेतसा ३० अथदेव्यामतंज्ञात्वाहृद्गतंप्रियचिकीर्षितं ससमाज्ञापयामासतिष्ठत्वमितिनंदिनं ३१
ततोयोगबलंकृत्वासर्वयोगेश्वरेश्वरः तैःसमंसमहातेजाभीमैरनुचरैस्तदा ३२ सहसाघातयामासदेवदेवःपिना
कधृक् केचिन्नादानमुंचंतकेचिद्धासांश्चचक्रिरे ३३ रुधिरेणापरेराजंस्तत्राग्निंसमवाकिरन् केचिद्यूपान्स
मुत्पाट्यबभ्रमुर्विकृताननाः ३४ आस्यैरन्येचाग्रसंततथैवपरिचारकान् ततःसयज्ञोनृपतेवध्यमानःसमंत
तः ३५ आस्थायमृगरूपंवैखमेवाभ्यगमत्तदा तंतुयज्ञंतथारूपंगच्छंतमुपलभ्यसः ३६ धनुरादाय
वाणेनतदान्वसरतप्रभुः ततस्तस्यसुरेशस्यक्रोधादमिततेजसः ३७ ललाटात्प्रसृतोघोरःस्वेदबिंदुर्बभूव
ह तस्मिन्पतितमात्रेचस्वेदबिंदौतदाभुवि ३८ प्रादुर्बभूवसुमहानग्निःकालानलोपमः तत्रचाजायत
तदापुरुषःपुरुषर्षभ ३९

५० ५१ शिलाजतुर्धातुविशेषः नीलिकारोवालं ५२ ५२ ५२ ५२

ह्रस्वोतिमात्रंरक्ताक्षोहरिश्मश्रुर्विभीषणः ऊर्ध्वकेशोतिरोमांगःश्येनोलूकस्तथैवच ४० कराल
कृष्णवर्णश्चरक्तवासास्तथैवच तंयज्ञंसमहासत्वोदहत्कक्षमिवानलः ४१ व्यचरत्सर्वतोदेवान्प्राद्रव
न्नृषींस्तथा देवाश्चाप्यद्रवन्सर्वेततोभीतादिशोदश ४२ तेनतस्मिन्विचरतापुरुषेणविशांपते
पृथिवीह्यचलद्राजन्नतीवभरतर्षभ ४३ हाहाभूतंजगत्सर्वमुपलक्ष्यतदाप्रभुः पितामहोमहा
देवंदर्शयन्प्रत्यभाषत ४४ ब्रह्मोवाच भवतोपिसुराःसर्वेभागंदास्यंतिवैप्रभो क्रियतांप्रतिसंहारः
सर्वदेवेश्वरत्वया ४५ इमाहिदेवताःसर्वाऋषयश्चपरंतप तवक्रोधान्महादेवनशांतिमुपलेभिरे
४६ यश्चैषपुरुषोजातःस्वेदात्तेविबुधोत्तम ज्वरोनामैषधर्मज्ञलोकेषुप्रचरिष्यति ४७ एकीभूतस्यनत्व
स्यधारयतेजसःप्रभो समर्थासकलापृथ्वीबहुधासृज्यतामयं ४८ इत्युक्तोब्रह्मणादेवोभागेचा
पिप्रकल्पिते भगवंतंतथेत्याहब्रह्माणममितौजसं ४९ परांचप्रीतिमगमदुत्स्मयंश्चपिनाकधृक् अवा
पचतदाभागंयथोक्तंब्रह्मणाभवः ५० ज्वरंचसर्वधर्मज्ञोबहुधाव्यसृजत्तदा शांत्यर्थंसर्वभूतानांशृणुतच्चापि

पुत्रक ५१ शीर्षाभितापोनागानांपर्वतानांशिला
जतु अपांतुनीलिकांविद्यान्निर्मोकंभुजगेषुच ५२

रेवारकः पशूनांपादरोगः ५३ रंध्रागतंच अश्वगलरंध्रगतंमांसखंडं ६२ अष्टाधिकशततमः॥ ॥ ७



रेवारकःसौरभेयाणांमूखरकंपृथिवीतले पशूनामपिधर्मज्ञदृष्टिप्रत्यवरोधनं ५३ रंध्रागतमथाश्वानांशि
खोद्भेदश्चबर्हिणां नेत्ररोगःकोकिलस्यज्वरःप्रोक्तोमहात्मना ५४ अवीनांपित्तभेदश्चसर्वेषामितिनः
श्रुतं शुकानामपिसर्वेषांहिक्किकाप्रोच्यतेज्वरः ५५ शार्दूलेष्वथधर्मज्ञश्रमोज्वरइहोच्यते मानुषेषुतुधर्म
ज्ञज्वरोनामैषभारत ५६ मरणेजन्मनितथामध्येचाविशतेनरं एतन्माहेश्वरंतेजोज्वरोनामसुदारुणः ५७
नमस्यश्चैवमान्यश्चसर्वप्राणिभिरीश्वरः अनेनहिसमाविष्टोवृत्रोधर्मभृतांवरः ५८ व्यजृंभतततः शक्र
स्तस्मैवज्रमवासृजत् प्रविश्यवज्रोवृत्रंचदारयामासभारत ५९ दारितश्चसवज्रेणमहायोगीमहासुरः
जगामपरमंस्थानंविष्णोरमिततेजसः ६० विष्णुभक्त्याहितेनेदंजगद्व्याप्तमभूत्तदा तस्माच्चनिहतोयुद्धेवि
ष्णोःस्थानमवाप्तवान् ६१ इत्येषवृत्रमाश्रित्यज्वरस्यमहतोमया विस्तरःकथितःपुत्रकिमन्यत्प्रब्रवीमि
ते ६२ इमांज्वरोत्पत्तिमदीनमानसःपठेत्सदायःसुसमाहितोनरः विमुक्तरोगःससुखीमुदायुतोलभेतका
मान्सयथामनीषितान् ६३ शांतौमोक्षधर्मेषुज्वरोत्पत्तिर्नामाध्यायः॥ ॥ ॥ ॥ ॥

प्राचेतसस्येति हरगीतोपसंहारे अयं स भगवान्देवः पितामहजनार्दनः सनत्कुमारो रुद्रश्चायं यज्ञदारव्यातवान्मुरेति श्रीकृष्णस्य प्रकरणप्रतिपाद्यत्वो
क्त्यानिर्विशेषब्रह्मावाप्तिद्वयमनेनमुक्ता तत्र सक्तानुमसक्तोत्वेन हरवैद्धरोत्पत्तिं चोक्त्वा पुनरपि तस्यैव मूर्त्तिमतः परमेश्वरस्य परमकारुणिकत्वं
त्वं दर्शयितुं द्विषंतमपि भगवानदंडपूर्वकमनुगृह्णातीति दक्षाख्यायिकामुखेनोक्ता तत्रैकैमुतिकन्यायेन भक्तेष्वनुग्रहः सिद्ध्यतीति भक्त्या

जनमेजय उवाच प्राचेतसस्य दक्षस्य कथं वैवस्वतेंतरे विनाशमगमद्ब्रह्मन्हयमेधः प्रजापतेः १ देव्या
मन्युकृतं मत्वा क्रुद्धः सर्वात्मकः प्रभुः प्रसादात्तस्य दक्षेण स पुनः संधितः कथं एतद्वेदितुमिच्छेयं तन्मे
ब्रूहि यथातथं २ वैशंपायन उवाच पुरा हिमवतः पृष्ठे दक्षो वै यज्ञमाहरत् गंगाद्वारे शुभे देशे ऋषिसि
द्धनिषेविते ३ गंधर्वाप्सरसाकीर्णे नानाद्रुमलतावृते ऋषिसंघैः परिवृतं दक्षं धर्मभृतां वरं ४ पृथि
व्यामंतरिक्षे च ये च स्वर्लोकवासिनः सर्वे प्रांजलयो भूत्वा उपतस्थुः प्रजापतिं ५ ॥ ॥

भगवतोपशरणार्थं नाम्नामष्टसहस्रं च वक्तुमयमध्याय आरभ्यते मोक्षधर्मेषु पाठगव्याप्तस्य तत्त्वस्य साक्षात्तत्त्वज्ञानहेतुतया शमदमादिवत्तमोक्षोपयो
गित्वं इतरेषां तु पशादिवद्विहितत्वशुद्धानुसंधानद्वाराद्धेतुत्वमिति अयमेव पदेशः सम्यग्विभजनेतत्र प्राचेतसस्य दक्षस्येत्यादिर्नाम्नामष्टसहस्रेणास्तुतवा
न्वृषभध्वजमित्यंतः स्पष्टार्थोग्रंथः तस्य तात्पर्यं परमेश्वरद्रोहिणाकृतं कर्म अनर्थावहं तदनुग्रहमंतरेणानुशिष्टचिकित्स्यं चेतिसर्वप्राप्यमिति ४ ५

मा०
३२८

328

देवदानवगंधर्वाः पिशाचोरगराक्षसाः हाहाहूहूश्च गंधर्वौ तुंबुरुर्नारदस्तथा ६ विश्वावसुर्विश्वसेनो गंधर्वाप्सरसस्तथा
आदित्या वसवो रुद्राः साध्याः सहमरुद्गणैः ७ इंद्रेण सहिताः सर्वे आगता यज्ञभागिनः ऊष्मपाः सोमपाश्चैव धूम
पा आज्यपास्तथा ८ ऋषयः पितरश्चैव आगता ब्रह्मणा सह एते चान्ये च बहवो भूतग्रामाश्चतुर्विधाः ९ जरा
युजांडजाश्चैव सहसा स्वेदजोद्भिजैः आहूता मंत्रिताः सर्वे देवाश्च सहपत्निभिः १० विराजंते विमानस्था दी
प्यमाना इवाग्नयः तान्दृष्ट्वा मन्युना विष्टो दधीचिर्वाक्यमब्रवीत ११ नापूज्यपूजने वाधर्मो यत्र रुद्रो न इज्यते ॥
वधबंधं प्रपन्ना वै किन्तु कालस्य पर्ययः १२ किन्तु मोहान्न पश्यंति विनाशं पर्युपस्थितं उपस्थितं महाघोरं न बुध्यं
ति महाध्वरे १३ इत्युक्त्वा स महायोगी पश्यति ध्यानचक्षुषा स पश्यति महादेवं देवीं च वरदां शुभां १४ नारदं च म
हात्मानं तस्या देव्याः समीपतः संतोषं परमं लेभे इति निश्चित्य योगवित् १५ एकमंत्रास्तु ते सर्वे येनेशो न निमंत्रि
तः तस्माद्देशादपक्रम्य दधीचिर्वाक्यमब्रवीत १६ अपूज्यपूजनाच्चैव पूज्यानां चाप्यपूजनात् नृघातकसमं पापं श
श्वत्प्राप्नोति मानवः १७ अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन देवतानामृषीणां च मध्ये सत्यं ब्रवीम्यहं १८ आगतं
पशुभर्तारं स्रष्टारं जगतः पतिं अध्वरे ह्यग्रभोक्तारं सर्वेषां पश्यत प्रभुं १९ दक्ष उवाच संति नो बहवो रुद्राः शूलह

राम०
३२८

स्ताः कपर्द्दिनः एकादशस्थानगतानाहं वेद्मि महेश्वरं २० दधीचिरुवाच सर्वेषामेव मंत्रोयं येनासौ न निमंत्रितः यथा
हं शंकरादूर्ध्वं नान्यं पश्यामि देवतं तथा दक्षस्य विपुलो यज्ञोयं न भविष्यति २१ दक्ष उवाच एतन्मखेशाय सुवर्णपात्रे ह
विः समस्तं विधिमंत्रपूतं विष्णोर्नयाम्यप्रतिमस्य भागं प्रभुर्विभुश्चाहवनीय एषः २२ देव्युवाच किं नाम दानं नियमं तपो
वा कुर्यामहं येन पतिर्ममाद्य लभेत भागं भगवानचिंत्यो अर्द्धं तथा भागमथो तृतीयं २३ एवं ब्रुवाणां भगवान्स्वपत्नीं प्रहृष्ट
रूपः क्षुभितामुवाच न वेत्सि मां देवि कृशोदरांगि किं नाम युक्तं वचनं मखेशे २४ अहं विजानामि विशालनेत्रे ध्यानेन
हीना न विदंत्यसंतः तवाद्य मोहेन च सेंद्रदेवा लोकास्त्रयः सर्वत एव मूढाः २५ मामध्वरे शंसितारः स्तुवंति रथंतरं साम गा
यंति चापि मां ब्राह्मणा ब्रह्मविदो यजंते ममाध्वर्यवः कल्पयंते च भागं २६ देव्युवाच सुप्राकृतोपि पुरुषः सर्वः स्त्रीजनसं
सदि स्तौति गर्वायते चापि स्वमात्मानं न संशयः २७ भगवानुवाच नात्मानं स्तौमि देवेशि पश्य मे तनुमध्यमे यं स्रक्ष्या
मि वरारोहे याागार्थे वरवर्णिनि २८ इत्युक्त्वा भगवान पत्नीमुमां प्राणैरपि प्रियां सोसृजद्भगवान्वक्त्राद्भूतं घोरं प्रहर्षणं
२९ तमुवाचाक्षिप मखं दक्षस्येति महेश्वरः ततो वक्त्राद्विनिष्क्रांतः सिंहेनैकेन लीलया ३० देव्या मन्युव्यपोहार्थं हतो दक्षस्य
वै क्रतुः मन्युना च महाभीमा महाकाली महेश्वरी ३१ श्री

त्मनः कर्मसाक्षित्वेतेनसार्द्धंसहानुगा देवस्यानुमतंमत्वाप्रणम्यशिरसाततः ३२ आत्मनःसदृशःशौर्याद्बलरूपसमन्वितः सएव
भगवान्क्रोधःप्रतिरूपसमन्वितः ३३ अनंतबलवीर्यश्चअनंतबलपौरुषः वीरभद्रइतिख्यातोदेव्यामन्युप्रमार्जकः ३४
सोसृजद्रोमकूपेभ्योरौम्यान्नामगणेश्वरान् रुद्रतुल्यागणारौद्रारुद्रवीर्यपराक्रमाः ३५ तेनिपेतुस्ततस्तूर्णंदक्षयज्ञविहिं
सया भीमरूपामहाकायाःशतशोथसहस्रशः ३६ ततःकिलकिलाशब्दैराकाशंपूरयन्निव तेनशब्देनमहतात्रस्तास्त
त्रदिवौकसः ३७ पर्वताश्चव्यशीर्यंतचकंपेचवसुंधरा मारुताश्चैवघूर्णंतिचुक्षुभेवरुणालयः ३८ अग्नयोनैवदीप्यंतेनै
वदीप्यतिभास्करः ग्रहानैवप्रकाशंतेनक्षत्राणिनचंद्रमाः ३९ ऋषयोनप्रकाशंतेनदेवानचमानुषाः एवंतुतिमिरीभूतेनिर्द्द
हंत्यपमानिताः ४० प्रहरंत्यपरेघोरायूपानुत्पाट्यंतिच प्रमर्द्दंतितथाचान्येविमर्दंतितथापरे ४१ आधावंतिप्रधावंतिवा
युवेगमनोजवाः चूर्णंतेयज्ञपात्राणिदिव्यान्याभरणानिच ४२ विशीर्णाइवदृश्यंतेतारागणानभस्तले दिव्यान्नपा
नभक्ष्याणांराशयः पर्वतोपमाः ४३ क्षीरनद्योथदृश्यंतेघृतपायसकर्दमाः दधिमंडोदकादिव्याःखंडशर्करवालु
काः ४४ षड्रसानिवहंत्येतागुडकुल्यामनोरमाः उच्चावचानिमांसानिभक्ष्याणिविविधानिच ४५ पा
नकानिचदिव्यानिलेह्यचोष्याणियानिच भुंजंतेविविधैर्वक्त्रैर्विलु

पंत्याक्षिपंतिच ४६ रुद्रकोपान्महाकाया: कालाग्निसदृशोपमा: क्षोभयन्सुरसैन्यानिभीषयंत: समंतत: ४७ क्रीडंति
विविधाकाराश्चिक्षिपु: सुरयोषित: रुद्रक्रोधात्प्रयत्नेनसर्वदैवैस्सुरक्षितं ४८ तंयज्ञमदहत्क्षिप्रंरुद्रकर्मासमंतत:
चकारभैरवंनादंसर्वभूतभयंकरं ४९ छित्वाशिरोवैयज्ञस्याननादचमुमोदच ततोब्रह्मादयोदेवादक्षश्चैवप्रजा
पति: ऊचु: प्रांजलय: सर्वेकथ्यतांकोभवानिति ५० वीरभद्रउवाच नाहंरुद्रोनवादेवीनैवभोक्तुमिहागत: देव्या
मन्युकृतंमत्वाक्रुद्ध: सर्वात्मक: प्रभु: ५१ दृष्टुंचात्रैवविप्रेंद्रान्नैवकौतूहलेनवा तवयज्ञविध्वंसनार्थंसंप्राप्तंविद्धिमा
मिह ५२ वीरभद्रइतिख्यातोरुद्रकोपाद्विनि:सृत: भद्रकालीतिविख्यातादेव्या: कोपाद्विनि:सृता ५३ प्रेषितोदे
वदेवेनयज्ञांतिकमिहागतो शरणंगच्छविप्रेंद्रदेवदेवमुमापतिं ५४ वरंक्रोधोपिदेवस्यवरदानंनचान्यत: वीरभद्रव
च: श्रुत्वादक्षोधर्मभृतांवर: ५५ तोषयामासस्तोत्रेणप्रणिपत्यमहेश्वरं ५६ प्रपेदेदेवमीशानंशाश्वतंध्रुवमव्ययं
महादेवंमहात्मानंविश्वस्यजगत: पतिं ५७ दक्ष: प्रजापतिर्यज्ञैरिष्ट्वैस्तै: सुसमाहितै: आहूतादेवता: सर्वाऋषय
श्चतपोधना: ५८ देवोनाहूयतेतत्रविश्वकर्मामहेश्वर: तत्रक्रुद्धामहादेवीगणांस्तत्रव्यसर्जयत् ५९ प्रदीप्ते
यज्ञवाटेतुविद्रुतेषुद्विजातिषु तारागणामनुप्राप्तेरौद्रेदीप्तेमहात्मनि ६० शूलनिर्भिन्नहृदये: ॥ ॥ ॥ ॥

कूजद्भिःपरिचारकैः निखातोत्पाटितैर्यूपैर्प्रविद्धैरितस्ततः ६१ उत्पतद्भिः पतद्भिश्चगृध्रैरामिषगृद्धिभिः पक्षवातवि
निर्धूतैःशिवाशतनिनादितैः ६२ यक्षगंधर्वसंघैश्चपिशाचोरगराक्षसैः प्राणापानौसमंनिरुध्यवक्त्रस्थानेनयत्नतः
६३ विचार्यसर्वतोदृष्टिंबहुदृष्टिरमित्रजित् सहसादेवदेवेशोऽग्निकुंडात्समुत्थितः ६४ विभ्रत्सूर्यसहस्रस्य
तेजःसंवर्तकोपमः स्मितंकृत्वाब्रवीद्वाक्यंब्रूहिकिंकरवाणिते ६५ श्रावितेचमखाध्यायेदेवानांगुरुणाततः
तमुवाचांजलिंकृत्वादक्षोदेवंप्रजापतिः ६६ ६६ ६६ ६६ ६६ ॥ ॥

यैर्नामधेयैरितिउत्तरार्द्धतानीतिशेषः १ नन्विहनाम्नामष्टसहस्रेणेति अष्टाधिकंसहस्रंनाम्नांवक्तव्यत्वेनप्रतिज्ञातंतत्रनामपाठेकिं
चिदधिकानिषट्शतनामान्युपलभ्यंतेनचस्मृतिपदेष्वपिविपरिणामेननामान्युन्नेतुंशक्यंते अन्यशब्दस्यान्यार्थत्वकल्पनेप्रमाणाभावात्
नचतावतापिसंख्यापूर्त्तिःसंभवतितस्माद्गलितइहनामसमाम्नायइत्यव्याख्येयमेतत्सहस्रनामस्तोत्रं नापिपठनीयंन्यूनत्वेनवाग्वज्र

भीतशंकितवित्रस्तःसबाष्पवदनेक्षणः यदिप्रसन्नोभगवानयदिचाहंभवत्प्रियः ६७ यदिचाह
मनुग्राह्योयदिवावरदोमम यद्दग्धंभक्षितंपीतमशितंयच्चनाशितं ६८ चूर्णीकृतापविद्धंचयज्ञसंभा
रमीदृशं दीर्घकालेनमहताप्रयत्नेनसुसंचितं ६९ तन्नमिथ्याभवेन्मह्यंवरमेतंमहेश्वर। तथास्त्वित्याह
भगवान्भगनेत्रहरोहरः धर्माध्यक्षोविरूपाक्षस्त्र्यक्षोदेवःप्रजापतिः ७१ जानुभ्यामवनींगत्वादक्षोल
ब्ध्वाभवाद्वरं नाम्नामष्टसहस्रेणस्तुतवानवृषभध्वजं ७२ युधिष्ठिरउवाच यैर्नामधेयैःस्तुतवान
दक्षोदेवंप्रजापतिः वक्तुमर्हसिमेतातस्त्रोतुंश्रद्धाममानघ १ भीष्मउवाच श्रूयतांदेवदेवस्यनामान्यद्भु
तकर्मणः गूढव्रतस्यगुह्यानिप्रकाशानिचभारत २ ॥

त्वात्वाग्वज्रोहिमंत्रोऽध्येतारंनाशयतितथाचोक्तंशिक्षायांमंत्रोहीनःस्वरतोवर्णतोवामिथ्याप्रयुक्तोनतमर्थमाहसवाग्वज्रोयजमानं
हिनस्तियथेंद्रशत्रुःस्वरतोपराधादितिइंद्रंहंतुकामेनत्वष्ट्रापुत्रार्थिनास्वाहेंद्रशत्रुर्वर्द्धस्वेतिमंत्रे॥ ॥ ॥ ॥ ॥

गाहोमंकुर्वतांइंद्रपदंस्वेष्टसिद्धयेऽतोदात्तंप्रयोज्यंतत्रचनप्रयुक्तंप्रत्युतआद्युदात्तमेवतत्पठितमितिइंद्रस्यवर्ततपुत्रस्यनाशकोजातइत्युपा
ख्यायतेत्वष्टाहतपुत्रइत्यनुवाकोतस्मादस्यस्तवस्यमोक्षमंत्रत्वातवर्णितश्चायंतंहीनत्वान्नेष्टार्थप्रदत्वंपुंस्पतेऽपितुपाठकानर्थ
करत्वमेवेतिचेत उच्यते इदमिहजाबालाःसमामनंति। अथहैनंब्रह्मचारिणऊचुःकिंजप्येनामृतत्वंब्रूहीतिसहोवाचयाज्ञवल्क्यःशत
रुद्रियेणेत्येतानिहवाअमृतस्यनामधेयान्येतैर्हवाअमृतोभवतीति। अत्रनामजपस्यामृतसाधनत्वंगम्यतेतेषांचनाम्नांन्यूनाधिकभावे
नानेकासुशाखासुपठितानांगुणोपसंहारन्यायेनैकत्रोपसंहारेणभवितव्यंतत्रास्मदादीनामशक्यमितिभगवान्बादरायणः तैत्तिरीय
कवाजसनेयकादिप्रसिद्धशाखास्वविद्यमानानानानाम्नामुपसंहारमिहकृतवान् यथाहि आपस्तंबादिःकल्पकारःस्वपरशाखास्था
न्यंगान्युपदिश्यआग्नेयमष्टाकपालमितियथासमाम्नातमितिमध्येप्रधानंसिद्धवन्निर्दिश्यपुनरुपरिष्टात्त्वन्यान्यंगानिउपदिशति।
तद्वदिहापिनमस्तेदेवदेवेशेत्यादिनाकानिचिन्नामान्युपदिश्यत्रिसौपर्णीतथाब्रह्मयजुषांशतरुद्रियमितिसुपर्णीशतरुद्रियना
ममालायांसिद्धवन्निर्दिश्यशेषमपिनामधेयगणंपठति तथाच यथाप्रतिज्ञातमष्टोत्तरसहस्रंनाम्नांसंख्यापूर्यतेनान्यथातदि
दमभिप्रेत्योक्तंगूढानीति। गुह्यानिअश्रद्दधानेषुप्रकाश्यानि २ ॥ ॥

ग्र

नमस्ते देवेति ब्रह्मविद्याधिकाराद्ध्यात्मपरत्वेप्येवं तानि भाष्ये प्रयानि । तथा हि हे देव जगन्निर्माणकौशलपरेते तु भ्यं नमोस्तु इति युष्मदर्थस्य सर्वस्य प्रमेयस्य निर्देशः देवेश देवाः इंद्रियाणि ईशो बुद्धिः पूर्वबुद्धिः ख्यातिरीश्वर इति स्मृतेः एतदुभयात्मक । एतेन प्रमाणप्रमात्रोर्निर्देशः कृतः एवं नामत्रयेण ज्ञेयज्ञानज्ञात्रात्मक तत्त्वं देवस्योक्तं । तस्मात्प्रपाय्य त्रयेण हरिदेवारिणिति देवाः शमाद्या इंद्रियवृत्तयः तेषामरयः असुराः कामाद्यः तेषां बलसूदन । तथा च शमनकौ हि ब्रह्मदेवासुरश

नमस्ते देवदेवेश देवारिबलसूदन देवेंद्रबलविष्टंभ देवदानवपूजित २

द्वेयोः प्रयोगो द्वंद्वः द्वन्द्वयाह आज्ञापयः देवाश्चासुराश्चेति तिरश्चानामिंद्रियाणां दुष्टो बुद्धिः तस्याबलं विषयप्रावण्यं तत्त विशेषेण स्तंभातीति देवेंद्रबलविष्टंभ । अत एव देवैरिंद्रोपेंद्रदानवैश्चरणे ध्येयत्वेन पूजितत्वादादरेनैरंतर्येण सत्कारेण सेवितः । एवं च कामादिजयो धीनिरोधस्तेन द्वारेण देवमेयाद्यात्मकस्य वस्तुनः प्रापकत्वमुक्तं भवति ३ ॥

योगप्रथमेप्राप्यायाः सांवमूर्त्तेः स्वरूपमाह। चतुर्भिः सहस्रमक्षाणियुगपत्सर्वविषयप्रकाशकानींद्रियाणियस्य सर्वेत्तेसर्थः अत एवविरूपाणिअस
दृशीन्द्रियेभ्योविलक्षणानिअव्याहितान्दिव्याहकांणींद्रियाणियस्य। अक्षपदीणिणामस्योग्याख्यानिअक्षाणियस्य यक्षाधिपः कुबेरः सप्रियोयस्यास्त्र
याम्रूर्त्तेःस्वरूपमाहसर्वेत्यादिभिःचतुर्भिः भगवद्गीतास्वपिज्ञेयंयत्तत्प्रवक्ष्यामीतिप्रतिज्ञायसर्वतःपाणिपादंतदित्यादिनाइदमेवस्वरूपमुक्तं सर्वतःपा

सहस्राक्षविरूपाक्षत्र्यक्षयक्षाधिपप्रिय सर्वतः पाणिपादंत्वंसर्वतोक्षिशिरोमुख ४ सर्वतः श्रुतिमल्लोकेसर्वमावृत्य
तिष्ठसि। शंकुकर्णमहाकर्णकुंभकर्णार्णवालय ५ गजेन्द्रकर्णगोकर्णपाणिकर्णनमोस्तुते शतोदरशतावर्त्तश
तावर्त्तेशतजिह्वनमोस्तुते ६

णः अतः सन्निधिश्चयस्यसः सर्वतःपाणिपादंत्वमुत्तरत्वात्तथाचश्रुतिः विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोबाहुरुतविश्वतःस्यात्संबाहुभ्यांधम
तिसंपतत्रैर्द्यावाभूमिजनयन्देवएकः इति धर्मतिवशीकरोति सर्वेषुसंबोधनपदेषुनमस्तेइत्यनुषंजनीयंलोकेसर्वमा[illegible]त्यतिष्ठसीत्यस्यविपरिणा
मेणलोकेसर्वमावृत्यतिष्ठन्इतिसंबोधनमूहनीयंसार्द्धश्लोकः ४ शंकुकर्णादयःसमर्द्धेश्वरगणाः सर्वाभिन्नत्वाद्देशस्यनदान्मत्वउच्यते ५ शतो
दरेत्यर्द्धेविश्वरूपप्रपञ्चनार्थः २

अस्मिन्वेत्रे वर्णिकोपास्यत्वेनोक्तं इति पदत्रितं गायंतीति गायत्रिणः त्रितं प्रगायत्रीं जपपराः त्वामेव गायंति गायत्रीप्रतिपाद्यत्वमेवासीत्यर्थः अर्किणः
अर्कोपासनपराः त्वां अर्कं सवितारं मंडलाधिष्ठातारं च अर्चंति उपतिष्ठंते संध्यासु ब्रह्माणं ब्रह्मविदः चतुर्मुखं वा शतक्रतुर्देवेंद्रः उर्ध्वं सर्वोपाधिष्य उद्गत
खमिव आकाशवत् सर्वगतत्वं नित्यः असंगश्च तादृशं मेनिरे मुनयः अत्रापि गायत्रिणोपः अर्कोः अर्कश्चे० इत्यस्य व्याख्यानं कृतो ऽ उर्ध्वे खम् तुल्येन

गायंति त्वां गायत्रिणो ऽर्चंत्यर्कमर्किणः ब्रह्माणं त्वां शतक्रतुमूर्ध्वं खमिव मेनिरे ७ मूर्तौ हि ते महामूर्ते समुद्रांबर
संनिभा सर्वा वै देवता ह्यस्मिन्गावो गोष्ठ इवासते ८ भवच्छरीरे पश्यामि सोममग्निं जलेश्वरं आदित्यमथ वै विष्णुं
ब्रह्माणं च बृहस्पतिं ९ भगवान्कारणं कार्यं क्रियाकरणमेव च असतश्च सतश्चैव तथैव प्रभवाप्ययौ १०
नमो भवाय सर्वाय रुद्राय वरदाय च पशूनां पतये नित्यं नमो ऽस्त्वंधकघातिने ११ ॥ ॥ ॥

मतरंति नामानुल्यानि ७ मूर्तौ अष्टरूपायां भूम्यंबुवह्निवाय्वाकाशसूर्यचंद्रयजमानात्मिकायां सर्वदेवतामूर्तेरस्तु स्थनाम ८ हे भवेति हे सोमशरी
रत्वादीनि अष्टौ नामानि स्थानि ९ भगवन्नित्यादीनि पूर्वोक्तं पंचसदसत्प्रभवाप्ययमुत्तरार्धेन एक १० भवत्यस्मादिति भवः हिनस्तीति शर्वः रुः पापं द्र
वयतीति रुद्रः पशूनां ब्रह्मादिस्थावरांतानां जीवानां ११ ॥ ॥ ॥ ॥ ॥ ॥

मो०
३३३

नानारूपत्वेन स्तोति त्रिजटा यस्य सा दिना त्रिशूलवरेणायपाणिं तु अबह त्रिशीलमस्य तस्मै त्रिशूलवरपाणिने त्रीणि शर्बलाचार्य ध्यानानि त्र्यंबकानि नेत्रा
णीव गमकानि बोधकानि यस्य स त्र्यंबकः त्रीणि सोमसूर्याग्न्याख्यानि नेत्राणि यस्य ११ चंडः सर्वसद्दुष्टक्षमः मुंडः खमत्र वतस्वस्मिन् संचेधारयितुं
क्षमः । ऊर्ध्वं ग्रहणं उद्दंडिने दंडधारणं यशासि त्रेरसार्थः समश्चासौ कर्णश्च निसमकर्णः ऋजुर्वक्रश्च दंडी चासौ मुंडश्चेति दंडिमुंडः परिव्राजकः १२

333

ॐ३

त्रिजटाय त्रिशीर्षाय त्रिशूलवरपाणिने त्र्यंबकाय त्रिनेत्राय त्रिपुरघ्नाय वै नमः ११ नमश्चंडाय मुंडाय ऊर्ध्वडाया
ऊर्ध्वराय च दंडिने समकर्णाय दंडिमुंडाय वै नमः १२ नमोर्ध्वदंष्ट्रकेशाय शुक्लायावततायच विलोहिताय धू
म्राय नीलग्रीवाय वै नमः १४ नमोस्त्वप्रतिरूपाय विरूपाय शिवाय च सूर्याय सूर्यमालाय सूर्यध्वजपताकिने १५

ऊर्ध्वाश्चता दंष्ट्राः केशाश्च यस्य शुक्लाय शुद्धाय असंगिने तथापि [illegible] अवततायअवसन्नेन बाध्येन रूपेण जगद्व्याप्य तायव्याप्तवते विलो
हिताय परजोगुणिने धूम्राय तमोगुणिने । नीलग्रीवाय जगद्रक्षणार्थं के देविषधारित्वेन सात्त्विकाय १४ नास्ति प्रतिरूपः सदृशो यस्य । विविधानि
रूपाणि यस्य शिवाय परमकल्याणाय तुर्याय चरणे । सूर्याय सूर्यमंडलरूपाय सूर्यमालाय तस्मिन् मालत्वेन शोभते सूर्यमंडलान्तर्वर्तिने परमेश्वराय
सूर्यवत्प्रख्याः ध्वजाः पताकाश्च यस्य ६

राम०
३३३

पे२

समाथाः शिवगणाः श्वमेस्वस्कंधोयस्यपर्णानिमज्जेलवः चीराणिवल्कलानिवपद्मेयस्यशवरूपिणस्तायसस्मवा १५ नामायनामीजग
दस्मास्तीतिनाम्नः मल्वर्थीयोचु। यस्मिंतिचतिष्टिलोपः १० नाम्याय नाभिमेत्रंस्तीतिनाम्नः नाभिनमचेतियतम सेनभोदेशः नाभिस्थानीया
यत्रस्यश्रीरेनाभिस्थानेकारणकार्यप्रपंचो तयाचस्मृतिः तयथारेणुनाभिर्यितैतानाभावरान्त्रार्पिताएवमस्मिन्त्रोणिसर्वेसमर्पितं प्राणवल्लरिा

प२

नमः प्रमथनाथायवृषस्कंधायधन्विने शत्रुंदमायदंडायपर्णचीरपटायच १६ नमोहिरण्यगर्भायहिरण्यकवचा
यचहिरण्यकृतचूडायहिरण्यपतयेनमः १७ नमः स्तुतायस्तुत्यायस्तूयमानायवैनमः सर्वायसर्वभक्षायसर्व
भूतानांशरीरिणे १८ नमोहोत्रेथमंत्रायशुक्लध्वजपताकिने नमोनाभायनाभ्यायनमः कटकटायच १९ नमो
स्तुकृशनासायकृशांगायकृशायच संहृष्टायनमस्तुभ्यंनमः किलकिलायच २० नमोस्तुशयमानायशयितायो
त्थितायच स्थितायधावमानायमुंडायजटिलायच २१ नमोनर्तनशीलायमुखवादित्रवादिने नाद्योपहा
रलुब्धायगीतवादित्रशालिने ॥

सर्वकार्यकारणवाकटानामावरकाणामपिकटायश्चाचरकायनामहृदयेनांतर्बहिर्व्याप्तिदर्शिता १९ किलकिलायशब्दविशेषरूपाय २० सर्व
क्रियाकर्त्रेतेनस्तोतिनमोस्त्वित्यादिना ० नद्यांभवानिनाद्यानिकमलानि। नान्येवोपहारस्तत्रलुब्धाय। हरिस्तुसाहस्रंकमलवलिमाधाय
यस्यारिसेनदनेनसचितं २२ ॥ ॥ ॥

ज्येष्टोवयसाधिकः श्रेष्टोगुणाधिकः बलोवलाभिमानिनीदेवतांइकः तस्यप्रथंनपराजयस्तत्कर्त्रे कालस्यापिनाथायनियंत्रे कल्पायसमर्थायाक्षयायमहाप्रलयाय[illegible]।उपक्षयायत्र्यवांतरप्रलयाय। उप[illegible] २३ भीमंव्रतंश्मशानादितस्यधरायधत्रे २४ विभीषणायनिर्भयायभीष्मायभयंकरायाहेभीमाव्रतेः शमादिभिः धरंतोअर्कलांतंयस्यतस्मैतेव्रतधराय २५ पक्वायेत्रे आमं

नमोज्येष्टायश्रेष्टायवलप्रमथनायच कालनाथायकल्पायक्षयायोपक्षयायच २३ भीमदुंदुभिहासायभीमव्रतधरायच उ[illegible]ग्रायचनमोनित्यंनमोस्तुदृशबाहवे २४ नमः कपालहस्तायचितिभस्मप्रियायच विभीषणायभीष्मायभीमव्रतधरायच २५ नमोविकृतवक्त्रायखड्गजिह्वायदंष्ट्रिणे पक्वाममांसलुब्धायतुंबीवीणाप्रियायच २६ नमोवृषांकवृक्षायगोवृषायवृषायच कटंकटायदंडायनमः पचपचायच २७

अपक्वंपक्वंयस्मिंस्तेन उभयविधमांसलुब्धाय २६ वृषायवृक्षिकर्त्रेवृष्यायवृषोधर्मस्तत्रहितायधर्मवृद्धिकर्त्रेगोवृषायनंदिरूपायावृषायधर्मोयकर्कटकटायकटीगतोनित्यंवीरस्येरिनिहिलेमुमागमस्त्रार्थेवाघादिरूपेणनिसंगमनशीला[illegible]यस्यथेः कालायवा दंडायनियंत्रेपचपचायनिसंभृतानांपाककर्त्रेचकटिपचोपचायच २७ ॥

गीर्वैरः अतिवरो धेनुः ईप्सितमात्रदानं वरः तेनाप्यधिकदानं अतिवरः वरदेश्वरदाय धिंवत्स्यातो धातोरित्सालोपे रूपं २० रक्तोरागवान् विरक्तास्त
दृग्यः तदुभयात्मकाय भावनाय अध्यात्मो संभिन्नाय कार्याहाहृपेरास वेतो नुस्यूताय विभिन्नाय कार्याहृपेराम्याहृताय छायाय छायावेतेगृहेते

नमः सर्ववरिष्ठाय वराय वरदाय च वरमाल्यगंधवस्त्राय वराति वरदे नमः २८ नमो रक्तविरक्ताय भावनायाक्षमालि
ने संभिन्नाय विभिन्नाय छायायातपनाय च २९ अघोरघोररूपाय घोरघोरतराय च नमः शिवाय शांताय नमः
शांततमाय च ३० एकपाद्बहुनेत्राय एकशीर्षं नमो नमः क्षुद्राय क्षुद्रलुब्धाय संविभागप्रियाय च ३१ पंचाला
यसितांगाय नमः शमशमाय च नमश्चंडिकघंटाय घंटाया घंटघंटिने ३२ ॥ ॥ ॥ ॥

वैरिरूपाय छायाशरद्दर्शे आघव्र आतपनः आतपः एकपात् एकपदे ३१ पंचालाय विश्वकर्मणो स्वर्णकार लोहकार तक्षादिकर्मकर्तृत्वेऽस्त
र्थः शमशमाय निसंपर्ण मनीति पचपचवत् । चंडिकाशत्रुभयंकरी घंटाय स्तते से चंडिकघंटाय । घंटानादरूपाय । अघंट घंटिने नादं हेतु भावे
पिनाद्यते । अनाहतध्वनिरूपायेत्यर्थः ३२

पुसांस्तद्दैले युगपत्स्वाध्मानार कापिसतीप्रतिविंवाकेवत्प्रत्येकंपरिसमाप्तघंटास्यद्योगवलवत्तःसतथानाहशघंटामालाप्रियायप्राणः
पंचवृत्तिर्वायुःसरवघंटावत्तशब्दहेतुर्यस्मात्तस्मैप्राणघंटायगंधः प्रसिद्धः कलकलः ऊष्माकोलाहलोवा ३३ हकारः क्रोधवर्णःत
स्यपारोंतः शमः ह्रूंकारः यान्निकप्रसिद्धः ऊंइतिहिंकृत्य स्तुवःखरेणमितिजयत्सेभोभिहिंकार इति आश्वलायनोक्तेः भिहिंकारःत
स्यपारः मूर्णाहिलौकिकम्यः परंशान्तंह्रूंहकारः स्वाकाशः ऊंकारः षष्ठीशिवमूर्त्तिः सर्वैः तामंगनामरूपात्मकः प्रपंचोलक्ष्यते। मकारः
तस्यकारणंईश्वरः तस्यपारः तुरीयशान्तंब्रह्मतत्तद्दिस्तुंकौं ह्रूंहं हकारपारायेति ह्रूंह्रूंकारप्रियायेतिक्रोधवर्जंह्रूंकारहृदयप्रिया

सहस्राक्षानघंटायघंटामालाप्रियायच प्राणघंटायगंधायनमः कलकलायच ३३ ह्रूंह्रूंह्रूंकारपार
यह्रूंह्रूंकारप्रियायच नमः शमशमेनित्यंगिरिवृक्षालयायच ३४ गर्भमांसशृगालायतारकायतराय
च नमोयज्ञायपजिनेहुतायप्रहुतायच ३५

यः शमशमशांतोभवशांतोभवेस्याचेष्टशमशमेति। शाम्यशाम्यसपापंक्षितमोवाद्दिकत्समाधौ। शमशमतीतिशमःश्रुतस्मैशमशमे
आचारक्लिवंनाकृतेरिक्षिः ३४ गर्भमांसहृदयजिह्वावक्षआयवदानगतंमांसंतत्रशृगालवलुव्यापयद्वागर्भमांसंवपानस्या
लुव्याप। अमृताहुतिर्वपाहुतिरितिब्राह्मणात् तारकाययज्ञेभोक्तिलेनपापमोचकाय। तताय तरस्यनेनेतिसुखसायज्ञोपकरणा
य। यजिनेयजमानाय। ब्रह्महुतायब्राह्मणमुखेनतस्माय हुतायाग्निमुखेनतस्माय। ३५ ॥ ॥ ॥

यज्ञावाहादियज्ञलिंगादिरूपेणापन्नं निर्वोढुं दातापयितुं इयायानप्याम सत्यमयाय। अन्नपनापरज्ञोमयायान्तप्यं सलंनायकं रजरनिसांख्यप्रसिद्धे
तघायनदाहेनघादिरूपायनदानांनरवतीनांनदीनांपतयेसमुद्राय ३८ वालाश्चतेऽनुचराश्चतानगणपायतीतिवालानुचरगोप्ता शुभ्रः श्वेतः श्रोण

यज्ञवाहायदांतापतप्यायातपनायच नमस्तरायनघायतरानांपतयेनमः ३६ अन्नदायान्नपतयेनमस्त्वन्नभु
जेतथा नमः सहस्रशीर्षायसहस्रचरणायच ३७ सहस्रोद्यतशूलायसहस्रनयनायच नमोबालार्कवर्णा
यबालरूपधरायच ३८ बालानुचरगोप्त्रायबालक्रीडनकायच नमोवृद्धायलुब्धायक्षुब्धायक्षोभणायच
३९ तरंगांकितकेशायमुंजकेशायवैनमः नमः षट्कर्मतुष्टायत्रिकर्मनिरतायच ४० वर्णाश्रमाणांवि
धिवत्पृथक्कर्मनिवर्तिने नमोघुष्यायघोषायनमः कलकलायच ४१ श्वेतपिंगलनेत्रायकृष्णरक्तेक्षणा
यच प्राणभग्नायदंडायस्फोटनायकृशायच ४२ कर्मकामार्थमोक्षाणांकथनीयकथायच सांख्या
यसांख्यमुख्यायसांख्ययोगप्रवर्तिने ४३

दिकलनएतेनचाग्निपानादिः श्रीकृष्णलीलासूचिता ३९ त्रीणिकर्माणियजनाध्ययनदानानि ४० कलकलःकोलाहलः ४१ प्राणभ
ग्नायजितश्वासायवाहितागम्नदिविधिविशेष्यसेवपूर्वनियानः दंड आयुधं स्फोटनं विदारणं ४२ सांख्यायकपिलायनिरीश्वरवादिने सांख्य
मुख्यायसेश्वरपातंजलाय। सांख्यंवेदांतविचारः योगोनिदिध्यासनं अनुग्रहद्वारा एतयोः प्रवर्तकाय ४३

मो०
३३६

336

रथः तत्संबोधि विरथः नतु भयार्होयरथ्याविरथ्याय चतुष्पथजलाग्निवाधाकोशेषु पथ्यापथ्यस्य रथ्यस्य नत्र्हते रत्नायेति पोत प्रसिद्धोर्थः ४७ ईशानेति
हे ईशान वज्रसंघात वज्रवत्कठिनशरीर हरिकेश पिंगकेश अंबिका त्रिनेत्रा चासौ अंबिका च तस्याः नाथ अक्षस्वत्वमार्ग अव्यक्त कार्यहेप।

नमो रथ्यविरथ्याय चतुष्पथरथ्याय च कृष्णाजिनोत्तरीयाय व्यालयज्ञोपवीतिने ४४ ईशानवज्रसंघात हरि
केश नमोस्तु ते अंबकांबिकनाथाय व्यक्ताव्यक्त नमोस्तु ते स्थूलजीर्णांगजटिले वल्कलाजिनधारिणे
४७ दीप्तसूर्याग्निजटिले वल्कलाजिनवाससे सहस्रसूर्यप्रतिम तपोनित्य नमोस्तु ते ४८ उन्मादनशता
वर्त गंगातोयार्द्रमूर्धज चंद्रावर्त युगावर्त मेघावर्त नमोस्तु ते ५० त्वमन्नमन्नभोक्ता च अन्नदोन्नभुगेव च अ
न्नस्रष्टा च पक्ता च पक्वभुक्पवनोनलः ५१

व्यक्ताव्यक्तरूप ४५ कोमलतिह्ये हे स्थूल हे जीर्णांग जटिल वल्कलाचर्मजिनधारिन् जटिलत्वं जटिले दीप्तौ यौ सूर्याग्नी तद्वद्दीप्यमानजटावन्त ४८ हे
उन्मादन आमोहकाशनं आवर्तः यस्मिन् गंगातोयेन आर्द्रमूर्धज ४९ चंद्रे आवर्तः यनि पुनःपुनरिति चंद्रावर्तेत्यर्थः ५० त्वमिति
अन्नभुक् अन्नपालकः ५१

एम०
३३६

जरेति जरायुजांडजाद्द इति नामद्वयं संधिरार्षः हे देव हे देवेश भूतग्रामश्चतुर्विध इत्येकं नाम ५२ चरेति ब्रह्मेति ब्रह्मविदां वरेति च नामद्वयं ५३ मनस इति ५४
हायिहायीति सामगेति श्रुतगाथोत्तमाः तेषामेकं चतुर्णां एषां यः सुश्रेष्ठ इत्येकं ब्रह्मवादिगेयेति पंचमनुषेयं ५५ यजुरिति वेदोपनिषद्गणस्कतिप नी

अथ हाप २

जरायुजांडजाश्चैव स्वेदजाश्च तथोद्भिजाः त्वमेव देव देवेश भूतग्रामश्चतुर्विधः ५२ चराचरस्य स्रष्टा त्वं प्रतिहर्ता तथैव च त्वामाहुर्ब्रह्म
विदुषो ब्रह्म ब्रह्मविदां वर ५३ मनसः परमा योनिः खं वायुर्ज्योतिषां निधिः ऋचस्तामानि तथोंकारमाहुस्त्वां ब्रह्मवादिनः ५४
हायिहायि हुवा हायि हाविसांपि तथा सकृत् गायन्ति त्वां सुरश्रेष्ठ सामगा ब्रह्मवादिनः ५५ यजुर्मयो ऋङ्मयश्च त्वमाहुतिम
यस्तथा पठ्यसे स्तुतिभिश्चैव वेदोपनिषदां गणैः ५६ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वर्णावराश्च ये त्वमेव मेघसंघाश्च वि
द्युतोऽशनिगर्जितं ५७ संवत्सरस्त्वमृतवो मासो मासार्द्धमेव च युगा निमेषाः काष्ठाश्च नक्षत्राणि ग्रहाः कलाः ५८ वृ
क्षाणां ककुदोसि त्वं गिरीणां शिखराणि च व्याघ्रो मृगाणां पततां तार्क्ष्योनंतश्च भोगिनां ५९

पनिचतुर्थं ५६ वर्णावराः संकराः विद्युत्स्तनितं सशृष्टिको मेघशब्दः गर्जितं निर्घोषिकः सः नवनामानि ५७ वृक्षाणामिति ककुदो मुख्यः
मयो धाम्यश्चारयः पततां पक्षिणां ह्यापां नपास नार्थे विभूतयश्चकाः ५९

त्वमिति द्वौ इन्द्रो वायुविशेषः तद्वन्नामतः ज्ञातः शाब्दक्रिद्धिरिति शेषः ६१ दशलक्षणसंयुक्तो धर्म इत्येकं लक्षणानि च अहिंसा सत्यास्तेयब्रह्मचर्यापरि
ग्रहा यमा इति शौचसंतोषतपः स्वाध्यायेश्वरप्रणिधानानि नियमा इति च योगोक्तानि क्षमासत्यादीनि मनूक्तानि वा ६२ त्वगोष्ठ इति द्वे मृगपक्षिण इति द्वे



क्षीरोदो सुरदैत्यानां च यंत्राणां धनुरेव च वज्रः प्रहरणानां च अनन्तानां सत्तमेव च ५९ त्वमेव द्वेष इच्छा च रागो मोहः क्षमाक्षमे अवस्था
यो धृतिर्लोभः कामक्रोधौ जयाजयौ ६० त्वं गदी त्वं शरी चार्मी त्वं शृंगी द्रुहिणस्तथा छेत्ता भेत्ता प्रहर्त्ता त्वं नेता मंता पिता मतः
६१ दशलक्षणसंयुक्तो धर्मोऽर्थः काम एव च गंगा समुद्राः सरितः पल्वलानि सरांसि च ६२ लतावल्ल्यस्तृणौषध्यः पशवो मृग
पक्षिणः द्रव्यकर्मसमारंभाः कालपुष्पफलप्रदः ६३ आदिश्चान्तश्च वेदानां गायत्र्योंकार एव च ६४ हरितो रोहितो नी
लः कृष्णो रक्तस्तथारुणः कद्रुश्च कपिलश्चैव कपोतो मेचकस्तथा ६५ सवर्णश्चासुवर्णश्च वर्णकारो ह्यनोपमः सुवर्ण
नामा च तथा सुवर्णप्रिय एव च ६६ त्वमिन्द्रश्च यमश्चैव वरुणो धनदोऽनलः उपप्लवश्चित्रभानुः स्वर्भानुर्भानुरेव च ६७

द्रव्यकर्मणां समारंभ इत्येकं कालः पुष्पफलप्रद इत्येकं ६३ आदिश्चेत्यर्द्धं ६४ हरितादिर्द्दशविधो वर्णः ६६ त्वमिति उपप्लवरूपराग: ६७

होत्रमित्यर्द्धं हूयतेऽस्मिन्निति होत्रं वह्निः होता यजमानः प्रभुः हुतस्य फलदः ईश्वरः ४ त्रिसौपर्णं त्रिसुपर्णीविदितं नाममन्त्रजातं शतरुद्रसंबंधिनाममन्त्रजातं यस्मिन् तत्
शतरुद्रियं तत्र ब्रह्मवेदरूपं तेन तद्गणपर्वस्य शतरुद्रियस्यादिशिवो महेश्वरः शंभुरिति नामाष्टोत्तरशतादेरुक्तमाहात्म्यैः वेदांतेऽपि शतरुद्रनामानि संभाव्यंते तत्र याजु
नेययजुषामिति यजुषां शतरुद्रियमिमे नाम मुक्ते द्रोणपर्वस्थस्यापि शतरुद्रियस्य मूलभूतत्वभावेन यजुःसंबंधित्वसंभवाद्युक्तमुक्तं तस्य तथात्वेऽपि साक्षाद्देवता
भावात् तत्र स्वरूपं नैव च तथा च प्रभुरित्यन्तानि त्र्यष्टाशीत्यधिकं शतत्रयं नाम्नां भवति तथा च विश्वं च पवित्राणामपि मारीति निमिषान्मेषकर्मेतं तानि [illegible] धिकशत

होत्रं होता च होमश्च हुतं चैव तथा प्रभुः। त्रिसौपर्णं तथा ब्रह्म यजुषां शतरुद्रियं ६८

द्ध्यंतेन षडधिकं षट्शतानि नामान्यभिहितानि त्र्यष्टाधिकसहस्रस्य शेषं द्व्यधिकं नाम्नां शतचतुष्टयं त्रिसुपर्णशतरुद्रियाभ्यां पूरणीयं तत्राहि त्रिसुपर्णत्रये चतुर्द
श मंत्राः सर्वशाखानां नाम्नामुपसंहार्यत्वात् खिलसहितेषु नमकानुवाकेषु प्रथमे षोडश मंत्रा एकादश नामानि चेति सप्तविंशति २७ द्वितीये पंचत्वारिं
शत् तृतीयचतुर्थयोः षट्सप्ततिः ततः पंचमे द्विनवतिः ततो द्विके त्र्यशीतिरिति नाम्नामेवाप्ययोस्तु विंशतिर्मंत्राः शेषं रिति २७ सप्तदश मंत्राः नव
म्नानव गोविंदप्रत्यायोः मूलश्लोकाष्टैकविंशतिः सर्वेषां संकलनेन द्व्यधिकं शतचतुष्टयं एतत् पूर्वोक्तषडधिकषट्शत्या युतमष्टाधिकं सहस्रं भवति तथा वा
मृतत्वकामस्यायं नाम समाम्नायः त्रिसुपर्णत्रयशतरुद्रियाभ्यां समुच्चित एव श्रेयस्करः तत्र तथा मूलत्वेन वा प्रवचनसोपपन्नेऽरिति शिव ६८

पवित्रमिति गिरिंगिरिवद्चेतनंदेहंकायंतिशब्दयतीतिगिरिकः आतोनुपसर्गेकइतिकः अचेतनमपिदेहादिचेतनंकरोतीत्यर्थः अचेतनयद्चितोदेवोऽत्र
पृइतिमंत्रलिंगंचहिंडुकः हिंडतेगमनागमनंकुरुतेइतिहिंडुकः हिंडिगत्यादिस्मात्बाहुलकादुकम्प्रत्ययइत्यर्थः वृक्षः वृश्चतेछिद्यतेइतिवृक्षः उपाधिविशिष्ट
नरूपेणनाशवान्जीवः शुद्धस्वरूपेणजीवस्यैवननश्यतीत्यर्थः तथाचश्रुतिर्विज्ञानघनएवैतेभ्योभूतेभ्यः समुत्थायतान्येवानुविनश्यतीतिअविनाशीवाअरे

पवित्रंचपवित्राणांमंगलानांचमंगलं गिरिकोहिंडुकोवृक्षोजीवोपुद्गलएवच ६९ प्राणः सत्वंरजश्चैवतमश्चाप्रमदस्तथा प्राणोपा
नः समानश्चउदानोव्यानएवच ७० उन्मेषश्चनिमेषश्चक्षुतंजृंभितमेवच लोहितांतर्गतादृष्टिर्महावक्त्रोमहोदरः ७१ सू
चीरोमाहरिश्मश्रुरूर्ध्वकेशश्चलाचलः गीतवादित्रतत्वज्ञोगीतवादनकप्रियः ७२ मत्स्योजलचरोजाल्योऽकलः केलिकलः
कलिः अकालश्चातिकालश्चदुष्कालः कालएवच ७३

ममात्मेतिचपुद्गलः पूयतेगलतिचेतिपुद्गलोदेहः ६९ अप्रमदः प्रमदस्त्रियाहीनः ऊर्ध्वरेताइत्यर्थः ७० लोहितान्यंतर्गतानिचक्षुर्यस्य पुंवद्भा
वश्चार्षः ७१ चलाचलश्चलंतंचंचलः नञ्चावनोऽमानमेतीतिकृते ७२ मत्स्यइवमत्स्योजीवः संसारनद्यांजलेचरतीतिजाल्योवासनाजालब
द्धः बद्धतत्त्वश्चकलोदुर्द्धरः कलनंधारणंकलः केलिरेवकलोयस्यलीलयासंबद्धत्वंनलमवशात्यइत्यर्थः ७३ ७३

स्तुरः छेदनसाधनं कृतमस्त्येतेनुयोगफः कृतोछेदनेइत्तमस्त्वरुं प्रशोमितं अपक्षः अमित्रंनत्पभयंकरः संवर्तकवलाहकः कल्पांतमेघः ७४ घंटतिघोतनेइतिघंटः
प्रकाशवान् अघंटः मायावृततेनप्रच्छन्नप्रकाशः घटयतिकर्मफलैयोजयतिनरानितिघटी घंटावान् चलचेलीचरंतितेचराः स्थावरजंगमाः जीवाः तैः सा
र्द्धमिरिवचेलतिकोउत्तइतिचरुचेली मिलीमिलीमिलतश्लेषणेमिलः घञर्थेभावेकः नदस्यास्तीतिमिलीकारणेनपासर्वकार्येष्वनुस्यूतइत्यर्थः द्विवचनंनितां
व्याप्तिप्रदर्शनार्थं यद्वामिलीइतिद्विवचनांतेनमिलिइतिमंत्रपदंताभ्यासमुद्धृतंभवति गौडास्तुहुञ्चीलीचिलीमिलीइतिपठंति अस्मिन्पक्षेघंटीप्रया

मृत्युः सूरस्त्वकृत्नस्त्वपक्षोपक्षभयंकरः मेघकालोमहादंष्ट्रः संवर्तकवलाहकः ७४ घंटोघंटोघटीघंटीचरुचेलीमिलीमिली
ब्रह्मकायिकमग्नीनांदंडीमुंडस्त्रिदंडधृक् ७५ चतुर्युगश्चतुर्वेदश्चातुर्होत्रप्रवर्तकः चातुराश्रम्यनेताचचातुर्वर्ण्यकरस्तथा
७६ सदाचाक्षप्रियोधूर्तोगणाध्यक्षोगणाधिपः रक्तमाल्यांबरधरोगिरीशोगिरिकप्रियः ७७

वः हुडेतिसंबुद्धिः मिलीवत्त्वीलोविलीशब्दार्थापिद्धितपरोज्ञेयो ब्रह्मवर्णावः अग्नीनांकायिकंकायेभवंकायिकंजायासहमेवात्मानंद्धातपत्नतः१
तिश्चपत्नीवाभवतामितिमलकृते वह्निजायाखाहेत्यर्थः तेनऊँहुहुचीलिचीलिविलिचिलिति ऊँ स्वाहेतिचशारशाणीमंत्रदृष्टोभवति दंडीमुंडइतिप्र
महसः त्रिदंडइतित्रिदंडीरक्षकः १३ ७५ गिरिकंकपायंतप्रियमस्य ७७

मिलिमिलि२

मो०
३३९

339

शिलिकः अलंशिली ७८ नमस्कारस्यैवरूपांतरंनमोनमइतिशिष्टयोन्योतारकः प्रणवः तारकामयः प्रचुरतेहम्प्रः आकाशरूपः ७९ धाताआदिकर्ता
विधातासौतिकस्तष्टाचतुर्मुखः संधाताएकीकृतस्थापकः संसहर्तामहेश्वरः विधाताविधिर्दृष्टंकर्मसमर्थःधारणः सर्वाधिष्ठानभूतःकारणात्माऽब्धरःना
स्निधरोधर्त्तायस्येतिसर्वबाधावधिभूतः शुद्धात्माब्रह्माब्रह्मवित् तपश्चास्तिचतुष्टयंब्रह्मविद्यासाधनं ८० भूतानांजरायुजादीनामात्मा भूतकृतवियदादु

शिलिकः शिलिनांश्रेष्ठः सर्वशिल्पप्रवर्त्तकः भगनेत्रांकुशश्चंडः पूष्णोदंतविनाशनः ७८ स्वाहास्वधावषट्कारोनमस्कारोनम
स्कारो नमोनमः गूढव्रतोगुह्यतपास्तारकस्तारकामयः ७९ धाताविधातासंधाताविधाताधारणोधरः ब्रह्मातपश्चसत्यं
चब्रह्मचर्यमथार्जवं ८० भूतात्माभूतकृद्भूतोभूतभव्यभवोद्भवः भूर्भुवः स्वरितस्यैवध्रुवोदांतोमहेश्वरः ८१ दीक्षितो
दीक्षितः क्षांतोदुर्दांतोऽदांतनाशनः चंद्रावर्त्तोयुगावर्त्तः संवर्त्तः संप्रवर्त्तकः ८२

तारकः भूतोनित्यसिद्धः भूतंअतीतंभवतीतिकर्त्तरिक्तः वर्त्तमानंभविष्यंच तयोर्भवः उत्पत्तिर्यस्मात्मायाशबलात्तस्मापियउद्भवः उत्पत्तिस्थानं भू
र्भुवः स्वरितिनामत्रयं इतोध्रुवस्त्वेकंनाम इतोदृश्यमानाद्विपदादेरपिध्रुवः शाश्वतइत्यर्थः दांतः जितेंद्रियः अतएवमहेश्वरः इतरेभ्योब्रह्मा
दिभ्यईश्वरेभ्योपिमहान् ८१ अदांतनाशनइतिछेदः चंद्रमावर्त्तयतिमासः युगमासः युगमावर्त्तयतिकल्पः सएवसंवर्त्तः संवर्त्तः संप्रव
र्त्तकः सृष्टिहेतुः ८२

राम०
३३९

कामः स्त्र्यभिलाषः बिंदुः रेतो मृतपुत्रबीजभूतः सजर इति समासांतश्च आर्षः नंदीति दीर्घमार्षं असुख इतिच्छेदः ८३ शकुनिः पक्षिवद्गगनगः ८४ गोनर्दः कृ
ष्णावतारे गोपबाललीलायां गौरिव नर्दतीति शब्दं करोतीति तथा गोप्रतारः गवांच कर्षणात् तारकः विषजलात् शिष्टावृष्टितश्च गोवर्द्धनोद्धरणेन च आपत्तारकः गोवृषा
णां गोश्च रेण नंदी वाहनं यस्य ८५ गोमार्गः गवामिंद्रियाणां मार्ग इव गन्तास्वयः इंद्रियचालक इत्यर्थः अमार्गः इंद्रियाद्यगम्य इत्यर्थः श्रेष्ठः प्रशस्यतमः स्थि

कामो बिंदुरणुः स्थूलः कर्णिकारस्रजप्रियः नंदीमुखो भीममुखः सुमुखो दुर्मुखो मुखः ८३ चतुर्मुखो बहुमुखो रणेष्वग्नि
मुखस्तथा हिरण्यगर्भः शकुनिर्महोरगपतिर्विराट् ८४ अधर्महा महापार्श्वश्चंडधारो गणाधिपः गोनर्दो गोप्रतारश्च गोवृ
षेश्वरवाहनः ८५ त्रैलोक्यगोप्ता गोविंदो गोमार्गो मार्ग एव च श्रेष्ठः स्थिरश्च स्थाणुश्च निष्कंपः कंप एव च ८६ दुर्वारणो दुर्वि
षहो दुःसहो दुरतिक्रमः दुर्द्धर्षो दुष्प्रकंपश्च दुर्विषो दुर्जयो जयः ८७

रश्च लक्ष्मनहीनः स्थाणुः त्रैलोक्यधारणस्तंभः निष्कंपः कंपः कंपवान् ८६ दुर्वारणः मृत्युरूपेणागच्छन्नपि दुःखेनापि वारयितुमशक्यः अस
तद्रूपेणोऽतिगृह्णाति च न दुर्विषहः दुःसहस्यापि विषसहं तथा संग्रामे दुःसहः दुरतिक्रमश्च दुर्द्धर्षः धर्षयितुमशक्यः दुर्विषः दुःखेन वेष्टुं व्याप्तुं
प्रवेष्टुमशक्यः विश्वस्यामावित्तस्य कृतस्य येऽल्पंजयः जयः जयरूपी नरो धर्मराजोऽर्जुनो वा ८७

मो०
३४०
340

शशः शीतांशुः शशांकश्चंद्रः शमनो यमः ८८ यत्नमृगस्य व्याधस्त्वं हंता व्याधीनामागमः आधीनां गमस्त्व ८९ वीणावेदान्मानिच्चंबकानिचस्तू
षिपस्माविश्वस्त्वंच्चाग्निंपिबतीतिविषाग्निपाः विषाग्रपादितिपाठेविषमेवच्चग्रपादः त्रैलोक्याक्रमणाहीयस्माज्जिसतथाविषाग्रेः सकाशात्पातीतिवि
षाग्निपाः सर्वेत्रपिबतीत्येवचामधुश्च्युतानां स्वर्गादित्वात्पष्ठानांच्चग्रेश्वंपातीतिप्रथमश्लोकः चापन्नत्रातेत्यर्थः तुषिताना दैवानामाद्यः व्र

शशः शशांकः शमनः शीतांशुस्तुज्जराधिधृक् व्याधयो व्याधयस्त्वेवव्याधिहा व्याधिरेवच ८८ ममयत्नमृगव्याधो व्याधीनामागमोगमः
शिखंडी पुंडरीकाक्षः पुंडरीकवनालयः ८९ दंडधारस्त्र्यंबकस्त्वमुग्रदंडोंडनाशनः विषाग्रिपान्सुरश्रेष्ठः सोमपास्त्वं मरुत्पतिः
९० अमृतपास्त्वं जगन्नाथो देवदेवगणेश्वरः विषाग्निपामृत्युपाश्च क्षीरपाः सोमपास्तथा ९१ मधुश्च्युतानामग्रपास्त्वंत्वमेव
तुषिताद्यपाः हिरण्यरेताः पुरुषस्त्वमेवत्वत्वंस्त्रीपुमांस्त्वंचनपुंसकंच बालोयुवास्थविरोजीर्णदंष्ट्रस्त्वंनागेंद्रशक्रस्त्वंविश्वकृत्
विश्वकर्त्ता ९२ त्वंविश्वकृद्विश्वकृतांवरेण्यस्त्वंवरप्रदः विश्ववाहोविश्वरूपस्तेजस्वीविश्वतोमुखः चंद्रादित्यौचक्षुषीतेहृदयंचपिता
महः ९३
स्थानंपातीतितुषिताद्यपाः ९१ हिरण्यरेताः वह्निः विश्वकृत्विश्वकर्त्ता ९२ विश्वंकृंतातिछिन्नतीतिविश्वकृतात्विश्वसंहर्त्तेत्यर्थः विश्वकृतांवि
श्वसृजांवृत्तापतीनांवरेण्यः वरणीयः विश्वंवहतिपालनपोषणेनस्वस्मिन्धारयतीतिविश्ववाहः चंद्रेत्यर्द्धस्पष्टमेव ९३

एम०
३४०

सरस्वती नदी वा कूलरोणहृपावलवैराग्यं निमेषोन्मेषादिकं कर्मपल्लवः निमेषोन्मेषकर्माणं विना निमेषादिकमपि कर्मपि कर्तुं न कश्चिच्छक्नोतीत्यर्थः तथाच श्रुतिः
नहि त्वदीरं निमिषश्चमेशाइति तत्तत्त्वं नः अहोरात्रं विनिमेषः निमिषश्च नमिमेषापि नईशन ईशितवानश्चौपांचह्मादीनामपि पप्रपातोपि त्वस्मरणांवि
नानासीत् त्वत्प्रतरदानीं तनानामल्लसारणामिति श्रुतिपदार्थः २४ नब्रह्मा न च गोविंदस्तादयस्तु कविंशतिश्लोकाः जपहोमादिरेकैकनामगरणात्पा

महोदधिः सारस्वतीपावकलमनलोऽनिलः अहोरात्रं निमेषोन्मेषकर्मा २४ न ब्रह्मा न च गोविंदः पौराणा ऋषयो न ते महात्म्यं वेदितुं
शक्ता याथातथ्येन ते शिव २५ या मूर्तयः सुसूक्ष्मास्ते न मह्यं यांति दर्शनं ताभिर्मां सततं रक्ष पिता पुत्रमिवौरसं २६ रक्ष मां र
क्षणीयोहं तवानघ नमोऽस्तु ते भक्तानुकंपी भगवान् भक्तश्चाहं सदा त्वयि २७ यः सहस्राण्यनेकानि पुंसामावृत्य दुर्द
शः तिष्ठत्येकः समुद्रांते स मे गोप्तास्तु नित्यशः २८

पर्यवसंतीति शागर्क्रं २७ पुंसां सहस्राण्यावृत्य अज्ञानेनाभिभूय एकः तेषज्ञानतान् भावश्च सूक्ष्मः समुद्राणां कामानां अंते नाशे सति तिष्ठति प्रकाश
ते काम समुद्रमाविशेति मंत्रलिंगात् समुद्रशब्दः कामवचनः यदा सर्वे प्रमुच्यंते कामा ये स्य हृदि श्रिताः अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत
इति कामांते ब्रह्मभावश्रुतेश्च २८

ईदृशस्तेनेविहृदनुभवंश्रमाणायतियोगिनद्गाइति विनिद्रत्वेहेतुः जितश्वासाइति। नन्निद्रा हि श्वासनैवाण्डवमापहृदेन निहृद्गुवायो नुसुपुप्तिसदृशो मूर्द्धाभवति
तांवारयितुंसत्त्वस्थाइति नचाप्यज्ञानमस्त्येवेतिमासोहमाधिः किंतुसत्वोत्कर्षेसत्यस्यांकाष्ठायांजायमानाः हंब्रह्मास्मीतिपाकज्ञाहृत्तिः कतककणोवत्स्वयंचेय
विलाप्यत्वयमपिसंस्कारात्मनातिष्ठतोसत्वशब्दवाच्यातस्यातिष्ठंतीतिसत्त्वस्थाः संयतेंद्रियाइतिज्ञानशून्याः श्रुतिः ज्योतिः चिंतितन्मात्रंपुंज्ञानाः योगिनः ९९
यस्मिन्योगश्रयमथालंबनीयंमूर्तिमद्रूपमुपदिशति जटिलेन रविदावरनजटिल् तस्मै यावारक्षिवंतानुनातोः कर्तरिक्तम लंबोदरंयच्छरीरं नहूले क

यंविनिद्राजितश्वासाः सत्त्वस्थाः संयतेंद्रियाः ज्योतिः पश्यंतियुंजानास्तस्मैयोगात्मनेनमः ९९ जटिलेदंडिनेनित्यंलंबोदरशरीरिणे क
मंडलुनिषंगायतस्मैब्रह्मात्मनेनमः १०० यस्यकेशेषुजीमूतानद्यः सर्वांगसंधिषु कुक्षौसमुद्राश्चत्वारस्तस्मैतोयात्मनेनमः
१०१ संभक्ष्यसर्वभूतानियुगांतेपर्युपस्थिते यः शेतेजलमध्यस्थस्तंप्रपद्येंबुशायिनं १०२

मंडलुर्जलपात्रंतदेवनिषंगः बाणाधारोयस्य कमंडलुजलेनैवयक्षरक्षसादीन्नाशयतेइत्यर्थः ब्रह्माचतुर्मुखस्तदात्मन १०० इतकर्ध्वोवेराणींधा
रणामाहयस्येति १०१ चस्थाप्युपसंहारमाहसंभक्ष्येतिजलमिवजलंनिर्विशेषंब्रह्मतत्रयः मायावीशेतेलीनोभवति कथंसर्वभूतानिस्वाका
रादीनिसंभक्ष्यात्मनिप्रविलाप्यस्वयमपिलीयतइत्यर्थः १०

इमंराजयोगमनुष्ठातुमसमर्थस्यहठयोगमाह अविरेणेति मुखस्य ऊर्ध्वफलके गलछिद्रं तत्र चर्मांतं लंबिका लंबतो नतत्पश्चात् लंविकेति चक्षमाणच्यते तस्मा रह
चंद्रसूर्यदेवतयोरिडापिंगलयोर्नाड्योः संहारकत्वात् राहोर्वदनमित्युच्यते तत्र हि जिह्वाग्रे आक्रम धारितेसति वायुनिरुद्धो भवति सेयं खेचरीनाम मुद्रा हठयोगि
नां प्रसिद्धा सोमं चंद्रसंबन्धमृतं पिबते निशि रात्रौ ज्ञानेन यत्तात्विभागाभाव लक्षणायां समानिशा तद्भाव एव मेव हेतुमाह यतः स्वर्भानुः एहुरुक्तरूपः स्वर्कं वा
तं चंद्रं इडापिंगले सति तन्मार्गनिरोधेन द्विपूर्वरूपविभागो गलतिय: समांपरमभ्यासे अभितो रक्षतु त्वच्च ये यान्तरवाक्यानि समांत्यंयोगे इडायां पिंगलायां च चरा

रविशशवदनं राहोर्यः सोमं पिबते निशि ग्रसनर्कं च स्वर्भानु

र्नूनं खामांसोभिरक्षतु १०३

तस्वं इंभास्करौ इडायां चंद्रमास्तेषु पिंगलायां रविः स्मृतइति शिवयोगे च यतेषोऽभ्यासाधारतत्त्व एव स्थानि विशेषतत्र इस्तु पक्रमतत्व मं सवीरिका धारिजिह्वाग्रं तत्र स
पयेत् सुधाकलांस्त्रवंतेषामास्तानुसतत्स्मिकाले गौपालं बिकाबालनरोहनाभ्यांरीत्तज्ञता सा विपरीतमार्गेण यत्तालुमूलांतराभदेशे प्रवेशयेत्सोन्मनतां प्रयाति
ईश्वरपोक्तेलंविकोर्ध्वं स्थितेगर्ते रसनां विपरीतगां संयोजयेत्प्रयत्नेन सुधाकूपे विचक्षणः मुद्रैषा खेचरीप्रोक्ता भक्तानामनुरोधतः निरंतरकृताभ्यासात्पीयूषं
प्रत्यहं पिबेत् तेनविग्रहसिद्धिः स्यान्मृत्युमातंगकेसरीति इयमेव भ्रूमध्यदृष्टिमाह दत्तात्रेयः चंद्रः कपालविवरे जिह्वां व्याकृष्य धारयेत् भ्रूमध्यदृष्टिर

प्येषा मुद्रा भवति खेचरीति १०३

हि विधेपि पयोगोत्रिविधविधात्मकं मंत्रजातं पठंतिपैचेति गर्भोद्भवत्वं नंतेशिशवः अनुचतुर्मुखसृष्टिमनुपतिताः निर्गताल्यक्षत्र इतिशेषः पृथापथावत्न भा
गानुयते उपासते येईश्वाः पित्रश्वतेभ्योनमः तेचस्वाहातथाशब्दाभ्यांदेवेनहव्यकव्येनमुदंहर्षंप्राप्नुवंतु ४ अधिदैवात्तशांतिंप्राप्यआत्मभूतावा

येचानुपतितागर्भोयथाभागानुपासते नमस्तेभ्यः स्वधास्वाहाप्राप्नुवंतुमुदंतुते ४ येंगुष्ठमात्राः पुरुषादेहस्थाः सर्वदेहिनां ५
शंतुतेहिमांतितंनिसंचाप्यायपंतुमां ५ येनरोदंतिदेहस्थादेहिनोरोदयंतिच हर्षयंतिनहृष्यंतिनमस्तेभ्योस्तुनित्यशः ६ ये
नदीषुसमुद्रेषुपर्वतेषुगुहासुच वृक्षमूलेषुगोष्ठेषुकांतारेगहनेषुच ७ चतुष्पथेषुरथ्यासुचत्वरेषुसुरालयेषुच हस्त्यश्वरथशा
लासुजीर्णोद्यानालयेषुच ८ येषुपंचसुभूतेषुदिशासुविदिशासुच चंद्रार्कयोर्मध्यगतायेचचंद्रार्करश्मिषु ९ रसातलगतायेच
येचतस्मैपरंगताः नमस्तेभ्योनमस्तेभ्योनमस्तेभ्योस्तुनित्यशः १० येषांनविद्यतेसंख्याप्रमाणंरूपमेवच असंख्येयगुणास्त
स्मैनमस्तेभ्योस्तुनित्यशः ११

यथातेहृष्यंतिपेशुःशेति अंगुष्ठमात्राः जीवाः ५ आत्मानंत्ररागमतिपेद्यति देहिनः जीवानयतोरोदयंसमोहत्तारव्याएतेप्राणाःकृताः ६ आधिभौतिकेभ्यः सु
तप्राप्तयेपते येनदीषुविस्तारिना ८ तस्मैतत्परायोपईश्वरार्थमितमर्थः परंतत्कष्टवैराग्यादिकंगताः प्राप्ताः तदितिवाएतस्यमहतोभूतस्यनामधेय
मीतिश्रुतसाईश्वरस्यानवृहाभिधेयत्वमुक्तं १० येषामितिसार्थंम्यमेवअंगपतेरेणईश्वरस्योक्तं ११

स्वयंते ईश्वरस्यानिमंत्रणे युक्तिमाह सर्वेति उपादानत्वात् त्वं तपोमिलाद्यं तत्त्वम् स्वायुजनसर्वहितसर्वसृष्टिपूतस्येनासिवनवनिमंत्रणीयुक्तमित्यर्थः १३ ननु तपसानना
दिनाद्धेणमांजानन्कथंनिमंत्रितवाननोमाशंक्याह अथवेति १४ भावगतसमस्तावधिकृतत्वेन रागसभावगतसमस्तलेकयाहं त्वां त्रजानन इत्यर्थः हृदयं चित्तं

सर्वभूतकरो यस्मात्सर्वभूतपतिर्हरः सर्वभूतानां तपात्माचते न त्वं न निमंत्रितः १२ त्वमेव हि जसे यस्माद्यज्ञैर्विविधदक्षिणैः त्वमेव
कर्त्ता सर्वस्य तेन त्वं न निमंत्रितः १३ अथवा मायया देव सूक्ष्मया तव मोहितः एतस्मात्कारणाद्वापि तेन त्वं न निमंत्रितः १४
प्रसीद मम भद्रं ते भव भावगतस्य मे त्वयि मे हृदयं देव त्वयि बुद्धिर्मनस्त्वयि १५ स्तुत्वैवं स महादेवं विरराम प्रजापतिः भगवान
पि सुप्रीतः पुनर्दक्षमभाषत १६ परितुष्टोऽस्मि ते दक्ष स्तवेनानेन सुव्रत बहुनात्र किमुक्तेन मत्समीपे भविष्यसि १७ अश्वमेध
सहस्रस्य वाजपेयशतस्य च प्रजापते मत्प्रसादात्फलभागी भविष्यसि १८ अथैनमब्रवीद्वाक्यं लोकस्याधिपतिर्भवः आश्वा
सनकरं वाक्यं वाक्यविद्वाक्यसंमितं १९ दक्ष दक्ष न कर्त्तव्यो मन्युर्विघ्नमिमं प्रति अहं यज्ञहरस्तुभ्यं दृष्टमेतत्पुरातनं ११०

चिन्तनीनिस्वपसंकल्पमस्यत्वद्धो वरएवममाप्तोत्यर्थः १८ वाक्यं वचनं वाक्यं वक्तुमुचितं वाक्यविदां वाक्यानि तेषु संमतं युक्तिमत्तमं १९ तुभ्यं त्वदर्थं पूर्वक
लेऽप्यतः सर्वेषां कल्पानां समानरूपत्वात् अस्मिन्नपि कल्पे त्वदेहस्य यज्ञहर्त्ताहं ज्ञातः अतो मन्युर्न कार्यः अशक्तिकार्यत्वाद्विघ्न इत्यर्थः पुरातनं पुराणं ११०

मो०
३४३

348

२१ एतत्सांख्ययोगभूतं अनन्तहृदयं विधिनुक्तमनुत्तमैर्वैदिकं धर्ममनुवदन्ति वेदादिति २२ वेदोक्तं तपो देवादिभिश्चीर्णं तदपेक्षयापि मया वक्ष्यमाणं व्रतं श्रेष्ठमपि सा
ह अपूर्वमिति वेदषडंगेभ्यो सांख्ययोगतर्कैरनधिगतं किंतर्हि केवलात्प्रणिपत्त्याश्रमस्थपदेन प्रकाशितं सर्वतोभद्रं फलकाले साधनकाले च श्रेयोरूपं
सर्वतोमुखत्वं तद्वेषु वर्णाश्रमेषु च अभिमुखत्वं सर्वेषामिहाधिकारोस्तीत्यर्थः अव्ययं मोक्षहेतुत्वात् अब्दैः भूयसा कालेन अप्रत्याख्यैः सहस्रवत्सरसत्रानैः कर्मी

भूयस्त्वत्ते वरं दृष्टिनतलं गृह्णीष्व सुव्रत प्रसन्नवदनो भूत्वा तदिदं हैकमनाः शृणु २१ वे
दात्षडंगाद् दृढतरं सांख्ययोगाच्च युक्तितः ततः सुतप्तं विपुलं दुश्चरं देववानवैः १२२
अपूर्वं सर्वतोभद्रं विश्वतोमुखमव्ययं अब्दैर्दशाहसंयुक्तं गूढमप्राज्ञनिंदितं १२३

भिर्वा दशाहैः संयुक्तं दशापंचवर्षाः पंच नियमाश्चत्वार एवाहानि यत्र कृतवीर्येषां अहः अत्र सकनुवाचित्वेन नैव तान् महानि भवन्ती मारोस्वासिद्धं भूयसा कालेन
प्रणिपत्याप्यमनियमवद्भिर्लभ्यमित्यर्थः दशाहेति पाठे तदृन्नयागप्रमेलभ्यमित्यर्थः गौडास्तु दशार्द्धेति पठंति तदाहे प्रातं दशार्द्धैः पंचभिः संयोज्जातमि
मादिभिर्मंत्रैः संयुक्तं आग्नेयं भस्म सद्योजातादिपंचमंत्रैः परिगृह्याग्निवदंकमितिजलेन मिश्रयित्वा तादिह्यते अस्मिन्मते साक्षमिति पाशुपतव्रत
सैव विशेषणं गूढं आत्माश्रमस्य इति परमात्मना सुखं विनं अप्रकाशं अत्र एव अप्राज्ञैः कर्मठैर्निंदितं १२३

श्री०
३४३

वर्णेति सूतसंहितायामत्याश्रमस्थ इत्युक्तत्वात् अत्याश्रमपदं वर्णोपलक्षणीकृत्य वर्णाश्रमधर्मानतीत्य अतिक्रान्तं अतिवर्णाश्रमं कृतं तदा न अतिवर्णाश्रमीति तेन पदेन सूचि
विदितविद्याफलावस्थावाणि गृहस्थस्य वानप्रस्थार्थमुक्तं अतिवर्णाश्रमेनेति क्रमात् अथ्थाविचक्षणो मुमुक्षुः भूयस्तारेण ततः सर्वसंगासुत्कायः सर्वाश्रमाचाराणामिनः
स्तान्मदर्शनात् सवर्णानामभिमानवर्जितनतीतस्तान्निस्थितः तथा न विधिर्नेनिषेध स्वनवर्ज्यावर्ज्यकल्पना आत्मविज्ञानिनामस्तितथा चान्यत्तुनार्हैनेतितस्य
येषाचरणमप्यनुज्ञातं तदिदमभिप्रेत्य क्वचिद्वृथैव वर्णादिधर्मे विपरीतमुक्तं एतेन सर्वमेतत् दर्शनमतापिनिवृत्तिं तथा च सतत्रं सर्वोत्रानुमतिः श्वशीलानामपेत दर्शना
दितिच्छांदोग्योपनिषत्सु इहेच कारणाइम ग्रामप्रादारणकत्रवासमहेम्यं कुत्साषामलादतेविभिसेतं हेवाचनेतान्सेविधतेयययेमदूमेउपनिहिताइमेनेषां मेदेहीति

वर्णाश्रमकृते धर्मे विपरीतं क्वचित्समं । गतानि सन्ध्यावीतनमत्याश्रमिदं व्रतं ॥ २४

होतावतानसेवहसेहतालुपानमिमुच्छिष्टं वैमयो तंसाहितिहोवाचनासिवेनतुच्छिष्टमित्यननवाअनीविषमिमानलान दिति कामो मउद पानमिमि तिब्रह्मवि
दपस्तस्य भ्योच्छिष्टपक्कमाषभक्षणं तदन्नजलस्यागस्वधारणास्य कासेएवविदुषांनिषिद्धाचरणकामकारनिषेधं च दर्शयतः अतएवोक्तं तथाचरेत वै योगी स
तांधर्ममदूषयन् जना यथा वमन्येरन्न संगतिमिति साक्षात्कृतात्मतत्त्वस्य येषाचरणपरिशुद्धानां तत्त्वदर्शां चैव क्वचिदभेदो मुक्तिमक्षणे इति च क्वचिद्विपरीतम
पिवत्कृतः सममेव विदुषः कर्तृत्वाभिमानाभावेन तत्र विधिनिषेधयोरप्रवृत्तेः गतानि सन्ध्यावीतानि अथवाऽसितानिश्चितं अत्याश्रमपं परमहंसपारिव्राज्यं यथापित्वा
श्रमलिंगधारणं ब्रह्मणासेवनं तथापि तद्धर्माः शमादयः सर्ववर्णसाधारणाः अत एव गृहस्थादीनामप्यत्याश्रमित्वमुक्तं ब्रह्मवाणीसु सूतसंहितायां श्लोके त
नृविशिनष्टि इदं नतं दे स्वक्षमाणां वन मसत्याश्रमिनि निर्द्वन्द्वमिति समत्वपरं ॥ २४

मो०
३४४

किंतद्भूतमित्यत आह मयेति मयापि स्कन्दाग्न्यादिभ्यः प्रकटीकृतं एतद्ब्रह्मपतेः अथर्वशिरउपनिषदि वचनमेतत्पाशुपतं अग्निरिति भस्म जलमिति भस्म स्थलमि
ति भस्म व्योमेति भस्म सर्वं ह वा इदं भस्म मन एतानि चक्षूंषि भस्मानि अग्निरित्यादिना भस्म गृहीत्वा निमृज्याङ्गानि संस्पृशेत् तस्माद्व्रतमेतत्पाशुपतं पशुपाश

344

मया पाशुपतं दक्ष शुभमुत्पादितं पुरा तस्य चीर्णस्य तत्सम्यक् फलं भवति पुष्कलं २५ तच्चास्तु ते महाभाग त्यज्यतां मानसो ज्वरः
एवमुक्त्वा महादेवः सपत्नीकः सहानुगः अदर्शनमनुप्राप्तो दक्षस्यामितविक्रमः २६ दक्षप्रोक्तं स्तवमिमं कीर्तयेद्यः शृ
णोति वा नाशुभं प्राप्नुयात्किंचिद्दीर्घमायुरवाप्नुयात् २७ यथा सर्वेषु देवेषु वरिष्ठो भगवाञ्छिवः तथा स्तवो वरिष्ठोऽयं स्त
वानां ब्रह्मसंमितः २८ यशोराज्यसुखैश्वर्यकामार्थधनकाङ्क्षिभिः श्रोतव्यो भक्तिमास्थाय विद्याकामैश्च यत्नतः २९
व्याधितो दुःखितो दीनश्चौरग्रस्तो भयार्दितः राजकार्याभियुक्तो वा मुच्यते महतो भयात् ३० अनेनैव तु देहेन गणानां स
मतां व्रजेत् तेजसा यशसा चैव युक्तो भवति निर्मलः ३१

विमोक्षो येन पशवो जीवाः पाशः अविद्या यद्यपि संन्यासः भस्मोद्धूलनं च दृष्टमपि विद्यार्थमुक्तं तथापि संन्यासस्य तीव्रत्वमवेत्याधिकारिकत्वेन कृता
त्मनः स्वधारणासेवमुख्यं विद्यांगत्वं ध्येयं २७ ब्रह्मसंमितः वेदेन तुलितः अस्मिन्स्तवे ऋग्वेदभागोऽपौराणांशः इति २८ विद्याकामैः ब्रह्मसाक्षा
त्कारार्थिभिः ३१

श्रीरा
३४४

नामजपे विशेषविधिमाह देवस्येति गुहस्य कार्त्तिकेयस्य अत्रायं प्रयोगः शुचिः कृतनित्यक्रियः कालाग्निरुद्रोपनिषदुक्तप्रकारेण भस्म धृत्वा रुद्राक्षां
श्च धृत्वा मुक्तसंगः पूतशुद्ध्यादि सर्वं पूर्वोक्तां शतदशाक्षरमंत्रेणोच्चापि स्वतनुं मिरंतो त्रिभिस्सर्वतो पंचांगद्वयं कृत्वा पंचाक्षरेणोक्तविधिना वाग्न्यासध्यानपूजा

न राक्षसाः पिशाचाश्च न भूता न विनायकाः । विघ्नं कुर्युर्गृहे तत्र यत्रायं पठ्यते स्तवः ॥ ३२ ॥ शृणुयाद्वा तथा नारी तद्गता ब्रह्म
चारिणी । पितृपक्षे मातृपक्षे पूज्या भवति देववत् ॥ ३३ ॥ शृणुयाद्यः स्तवं कृत्स्नं कीर्तयेद्वा समाहितः । तस्य सर्वाणि कर्माणि
सिद्धिं गच्छन्त्यभीक्ष्णशः ॥ ३४ ॥ मनसा चिन्तितं यच्च यच्च वाचानुकीर्तितं । सर्वं संपद्यते तस्य स्तवस्यास्यानुकीर्तनात् ॥ ३५ ॥ देवस्य
च गुहस्यापि देव्या नंदीश्वरस्य च । बलिं सुविहितं कृत्वा दमेन नियमेन च ॥ ३६ ॥ ततस्तु युक्तो गृह्णीयान्नामान्याशु यथा
क्रमं । ईप्सितांल्लभतेऽत्यर्थान् भोगान्कामांश्च मानवः ॥ ३७ ॥ प्रेतश्च स्वर्गमाप्नोति तिर्यक्षु च न जायते । इत्याह भगवा
न्व्यासः पराशरसुतः प्रभुः ॥ १३८ ॥ शांतौ मोक्षधर्मे पुदक्षप्रोक्तः शिवसहस्रनामस्तवः समाप्तः

दिकं कृत्वा गुहादिभ्यो गदेवताभ्यः पूजापूर्वकं बलिं दत्वा यथाशक्ति च यथानुसंधानपूर्वकं स्तवमावर्त्य ततः पूजां कृत्वा हृदि देवं विसर्जयेदिति १३८ इति
श्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवंशावतंसश्रीगोविंदसूरिसूनोः श्रीनीलकंठस्य कृतौ भारतभावदीपे शांतौ मोक्षधर्मे पुदक्षप्रोक्तशिव
सहस्रनामस्तवार्थप्रकाशो नाम नवाधिकशततमः

एवंतत्त्वपरिगणनाविशुद्धचेतसोयत्नेनज्ञेयंतत्स्वरूपमाह अध्यात्ममितिपुरुषस्यात्मनिस्वरूपेवर्ततेइत्यध्यात्मंस्वरूपाद्यविवेककार्यंशास्त्रंत्वध्यात्मंतत्
किंकुतस्त्वोसयत्नइतिप्रश्नः १ सर्वज्ञानमितिसर्वमसकृदुक्तमप्यध्यात्ममिहसंक्षिप्यवक्तिउपसंहारार्थेनतुउपक्रमोपसंहारयोरेकरूपेणत्वध्या
सेनयच्छास्त्रस्याध्यात्मपरत्वेनिश्चितेमध्येयद्गुणोत्रमध्यमंजयादिकमुक्तंतत्प्रकरणात्तदंगभावेननेतव्यमितिज्ञाप्यते तत्रयदध्यात्ममितस्यांतरंग

युधिष्ठिरउवाच अध्यात्मंनामयदिदंपुरुषस्येहचिंत्यते यदध्यात्मंयतश्चैवतन्मेब्रूहिपितामह १ भीष्मउवाच सर्वज्ञा
नेपरंबुध्यायन्मांत्वमनुपृच्छसि तद्व्याख्यास्यामितेतात तस्यव्याख्यामिमांशृणु २ पृथिवीवायुराकाशमापोज्योतिश्च
पंचमम् महाभूतानिभूतानांसर्वेषांप्रभवाप्ययौ ३ सतेषांगुणसंघातः शरीरंभरतर्षभ सततंहिविलीयंतेगुणा
स्तेप्रभवंतिच ४ ततःसृष्टानिभूतानितानियांतिपुनःपुनः महाभूतानिभूतेभ्यऊर्मयःसागरेयथा ५

त्पिपीलिकादि यतस्त्वेतत्सर्वंपुरुषेनिष्ठितंबुद्ध्यादिस्थादि अनयोःपुंबुद्ध्योर्विवेककार्यंशास्त्रंत्वध्यात्मं सर्वज्ञापतेःनेनेतिसर्वज्ञानंतदेवपरंतत्त्वंच
पंबुध्यावुद्धिमत्तयायन्मांत्वंविस्पष्टंकथयत २ भूतानांजरायुजादीनां ३ शरीरंस्थूलंसूक्ष्मंचतेषांभूतानांगुणसंघातःकार्यसमूहःगुणाःबुद्ध्यादयः
भौतिकाःपरमकारणेआत्मनिप्रलीयंते ४ ततःआत्मनःसकाशात्भूतानिजीवाःयांतिलीयंते यथासौबुमारीत्मनोःहमर्थस्यजीवस्य
तद्वत्तत्रैववलयःएवमहमर्थेषुभूतेषुमहाभूतानामपिलयोदयौभवतइत्यर्थः २ ३ ५

भूतानि एतादीनि भूतानां जीवादीनां स्वस्मीयांसि ऋणीयांसि प्राणानीवानापानसैनेवहृष्टिमात्रेणाविर्भावयितुं तिरोभावयितुं च शक्तानि ६ शरीरस्य भूतकार्यत्वमुक्तं
तत्र तत्तद्भूतांशानुविविनक्ति आकाशादीति बोधः शब्दः यः शरीरे प्रसिद्धः संघातः कठिनांशः रसो लोहितादिद्रवांशः रूपं गौरादि रूपमावरणं तन्मयं भूतमयं ७

प्रसार्य त्वेह्यंगानि कूर्मः संहरते यथा तद्भूतानि भूतानामल्पीयांसि स्वयोषतां ६ आकाशानलतुयोबोधः संघातस्तु मही
गुणाः वायोः प्राणो रसस्त्वम्भो रूपं तेजस्तमुच्यते ७ इमेतन्मयमेवैतत्स्थावरं जंगमं प्रलये च तमभ्येति तस्मादुद्दिश्यते पु
नः ८ महाभूतानि पंचैव तत्त्वे भूतेषु भूतकृत् विषयान्कल्पयामास यस्मिन्सदनुपश्यति ९ शब्दः श्रोत्रे तथा खानि त्रय
माकाशयोनिजं रसः स्नेहश्च जिह्वा च अपामेते गुणाः स्मृताः १० रूपं चक्षुर्विपाकश्च त्रिविधं ज्योतिरुच्यते घ्रेयं घ्राणं श
रीरं च एते भूमिगुणाः स्मृताः ११ प्राणस्पर्शश्च चेष्टा च वायोरेते गुणाः स्मृताः इति सर्वगुणा राजन्व्याख्याताः पांचभौतिकाः

४२

तस्मादुद्दिश्यते तस्मात् भूतकर्तुः ब्रह्मणः सकाशात् उद्दिश्यते जायत इति शब्दमात्रेणोच्यते न तु वस्तुतः तत्र लीयते उत्पद्यते वा रज्ज्वामुरग इव ८ भूतकृत्
अहंकारः भूतेषु देहेषु भूतानि खादीनि यथा कल्पयामास यस्मिंश्च भूते देहान्तस्थे यत्कार्यं अनुपश्यति तत्स्वरूपं इति शेषः ९ तदेवाह त्रिभिः शब्देति १०

यो०
३४६
346

सत्वमिति एतेषु शब्दादिषु पंचदशसु सात्विकत्वादिकं कालो तीतत्वादिर्धर्मः आगन्तुकः ताचतुर्युगात्मा विरुद्धभावः चयोगोबोबाकर्मबुद्धिः स्वविषयस्वरूपनिश्चयः यद्वा कर्मयापारः शरीरसंयर्थप्रसाधनं अतास्मशरीरप्रसाधनमित्यादिः बुद्धिः इतीतिरोभवरुपंदामित्यमवे तत्सवधारणं मनइदमित्थं नवेति संशयः कर्मस हितो बुद्धिपंचमो मयष्ठमनः यष्ठइंप्सुसमायावी १३ अस्मिन्पादतलादिमूर्द्धान्ते शरीरेऽस्याबुद्धिरेव शब्दादिमनोन्ते कविशतितत्स्वरूपेणाहपद्वर्धमिति १४

सत्वं रजस्तमः कालः कर्म बुद्धिस्वभावतः मनः षष्ठानि वर्त्तन्ते पुरुषे ईश्वरः समं कल्पयत् १३ यदूर्ध्वं पादतलयोर्यावन्मूर्द्ध्नः स्वरूपशालि
एतस्मिन्नेव कृत्स्ने यं वर्त्तन्ते बुद्धिरान्तरे १४ इन्द्रियाणि नरे पंच षष्ठं तु मन उच्यते ततः पां बुद्धिमेवाहुः सेऽत्रज्ञः पुनरष्टमः १५ इं
द्रियाणि च कर्त्तारं विविचेत अविभागशः ततः सत्वं रजश्चैव वर्त्तते पि भावास्तदाश्रयाः १६ चक्षुरालोचनायैव संशयं कुरुते मनः बु
द्धिरध्यवसानाय साक्षी क्षेत्रज्ञ उच्यते १७ तमः सत्वं रजश्चैव कालः कर्म च भारत गुणैर्नेनीयते बुद्धिर्बुद्धिरेवेन्द्रियाणि च १८

बुद्धेरेव सत्वरूपत्वमाह इंद्रियाणीति पुनः षष्ठं इत्यात्मत्मकारत्वमस्य इत्यो अतत्वेनक्षेत्रज्ञमानार्थे १५ भागशः कार्यविभागेनेतो पि भावाः सात्विकाद पोर्थाः तदाश्रयाः इंद्रियकर्त्ताश्रयाः ततएवात्यितादन्यार्थः १६ विभागमेवाह चक्षुरिति चक्षुः इंद्रियमात्रं साक्षी इंद्रियाद्यध्यवधानेन द्रष्टाचिन्मात्रः उदासीनः १२ गुणैः तमआदिपंचभिः नेनीयते पुनः पुनरतिशयेन वा विषयान्प्रति नीयते बुद्धिरेवेंद्रियाणि वकारात्तमआदिपंचबुद्धिरेव १८

राम०
३४६

अथ हेतुः बुद्ध्यभावे कुतो गुणा इति एतदेवाचष्टे येनेति द्वाभ्यां एतानि मनः प्रभृतीनि बुद्ध्या कल्पितानीति शेषः अवयवरूपैः अवयवीवत् इन्द्रियेषु दुष्टेषु बुद्धिर्दुष्य-
ति २१ पुरुषस्याश्रितानि तिष्ठतीत्याध्यासिकसंबंधेन वर्त्तमानानि पुरुषाश्रितानि कार्यादिषु सुखदुःखमोहात्मकेषु भावेषु विषयित्वया बुद्धिर्वर्त्तते २२ एवं हृष्ट

मनःषष्ठानि सर्वाणि बुद्ध्यभावे कुतो गुणाः येन पश्यति तच्चक्षुः शृणोति श्रोत्रमुच्यते जिघ्रति भवति घ्राणं रसति रसना रसान्
१९ स्पर्शनं स्पर्शति स्पर्शान् बुद्धिर्विक्रियते सकृत् यदा प्रार्थयते किंचित्तदा भवति सा मनः २० अधिष्ठानानि बुद्ध्या हीत्थं
एतानि पंचधा इन्द्रियाणीति तान्याहुस्तेषु दुष्टेषु दुष्यति २१ पुरुषे तिष्ठती बुद्धिस्त्रिषु भावेषु वर्त्तते कदाचिल्लभते प्रीतिं क-
दाचिदपि शोचति २२ न सुखेन न दुःखेन कदाचिदपि वर्त्तते सेयं भावात्मिका भावांस्त्रीनेतानतिवर्त्तते २३ सरितां सागरो
भर्त्ता यथा वेलामिवोर्मिमान् इति भावगता बुद्धिर्भावे मनसि वर्त्तते २४ प्रवर्त्तमानं तु रजस्तद्भावेनानुवर्त्तते प्रहर्षः प्रीतिरानं-
दः सुखं संशान्तचित्तता २५ कथंचिदुपपद्यन्ते पुरुषे सात्त्विका गुणाः परिदाहस्तथा शोकः संतापोऽपूर्तिरक्षमा २६ लिंगानि
रजसस्तानि दृश्यन्ते हेत्वहेतुभिः अविद्यारागमोहौ च प्रमादः स्तब्धता भयं २७ असमृद्धिस्तथा दैन्यं प्रमादः स्वप्नतंद्रिता
कथंचिदुपवर्त्तन्ते विविधास्तामसा गुणाः २८

प्रपंचः पुंबुद्ध्योरनंतभेदेपि आध्यासिकसंबंधात् ऐकात्म्यवानात्ता किंका पुमांसमेव सुखादि-
मंतमाहुः न सुखेनेति साधिवस्थाका २७ २८

श्री॥ ०

एवंसर्वेषांभावानांधीमान्नत्युक्तात्मतत्वेव्वत्तयोर्भेदंबाद्बेष्टेमत्तेसारिना ३४ संतत्यसंसर्गंकृत्वातान्ज्ञात्वात्मनोगुणानांचगुणागुणिभावेनसंसर्गोस्ती

म२

तद्व्ययस्येतिसंयुक्तंकायेमनसिवाभवेत् वर्द्धतेसात्विकोभावस्तद्रूपेस्वेननन्नया २८ अथपतङ्ग: खलंयुक्तमप्रीतिकरमा
त्मनः यद्यन्नंरजस्तेवत्तदसात्मचिंतयेत् ३० अथयन्मोहसंयुक्तंकायेमनसिवाभवेत् अप्रतर्क्यविज्ञेयंतमस
दुपधारयेत ३१ इतिबुद्धिगतीःसर्वाव्याख्यातायावतीरिह एतद्बुद्ध्वाभवेद्बुद्धःकिमन्यद्बुद्धलक्षणं ३२ सत्व
स्यैवनद्योरेतद्दन्तांविद्धिसत्वयोः सृजतेचगुणानेकएकोनसृजतेगुणान् ३३ पृथग्भूतौप्रकृत्यांतुसंप्रयुक्तौचसर्व
दा यथामत्स्योह्यद्भिःसःसंप्रयुक्तोभवेत्तथा ३४ नगुणाविदुरात्मानंसगुणान्वेदसर्वतः परिद्रष्टागुणानांतु
संस्रष्टामन्यतेयथा ३५

निमूर्खोयथामन्यतेतथापुंगुणानांपरिद्रष्टातान्स्रान्मेनात्मनिगुणान्स्पृशतोसर्थः ३५

ग्रा१

ननु किमाश्रितास्तर्हि गुणाः पर्वन्नः सत्त्वत्र्याहाश्रय इति बुद्धिसत्त्वस्याश्रयत्वपादानं नास्ति उपादानत्वेन कूसस्याज्ञानस्य सहस्य तस्य च्छत्वात् गुणानां सत्त्वादीनां
सर्गेण कार्येण महदादिना लिंगेन अस्मेकारणभूताः गुणाः सजंतीसत्त्वनुमीयते कदाचिदपि गुणानुत्कर्षिवदपि न वेद्य यथा रज्जूरगोपादानमज्ञानं कार्य
द्वारैवानुमीयते नेन तपोश्चोत्क्षिपते तद्वत् नत्व गुणानां तुच्छत्वेन तत्कार्येन हृश्येन खपुष्पसौरभवत् अत आह वेनतामसत्वमसीति असगुणसर्गसत्त्वं चेत

आश्रयो नास्ति सत्त्वस्य गुणसर्गाश्चेतनाः सत्त्वमस्त्यज्ञं तस्मे गुणान्वेद् कदाचन ३६ सजंते हि गुणास्तत्त्वं स्वे च तत्त्वः पीप
रपति संश्रयो गत्नयोरेषसत्त्वस्येत्र न तयोर्द्धवः ३७ इंद्रियैस्तत्र दीपार्थं क्रियते बुद्धिरंतरा निरवस्थैरज्ञानदृष्टिरिंद्रिया
णि प्रदीपवत् ३८ एवं स्वभावमेवैनं तत्र दुःखादिहेतवः अशोचन्नवहृष्यंश्च व सत्त्वैविंगतमत्सरः ३९ स्वभा
वसिद्धमेवैतं यदि मानस्तु नैगुणान् करणेनापि पर्ययात्तत्वं विज्ञेयात्तं तु वद्गुणाः ४०

नाधिष्ठानसन्नेवाध्यस्तसत्त्वेस्मसर्थः तथा च नास्तित्वं तत्तु च्छत्वं गुणानां अनिर्वचनीयस्य तद्रूपस्याप्युपगमात् अतो मत्सोषद्वसर्थः ३६ फलेवोऽवादि ३७ पदी
पार्थैः प्रदीपप्रयोजनं आवरणभंगं निरवस्थुर्धिः अचेतनैः अत एव अज्ञानदृष्टिः इंद्रियाणि प्रदीपवत् सहकारीणि बुद्धीरिंद्रियवत् कारणं विद्यमानात् प्रमात
वतत्त्वतीयः एतेन कुछ्यतिरिक्तस्वेतनमसिद्ध इति भावः ३८ दीपवस्तुभ्यां धीमान् रज्जूरगमिवइंद्रियबुद्धिभ्यां चितिर्विश्वमवभासयतीमाहू एवमिति ३९ क
रणेनाभिहृष्टांतो याऐपवस्तगेपरिणामत्वात् नाभ्रिमच्छेयः ४०

यस्मात्तत्स्मात्स्वलाइति यथा स्वच्छलोचपटविहीनेन कपालाद्यात्मनाहेयेण वर्त्तनेन दंगुणाः विवर्त्तेते यतः घटकपालवन्निहन्तानां गुणानां प्रवृत्तिः सुस्मा
वयवत्वाद्गुणेनोपलभ्यन्ते तेनः रज्जूरगवद्बुद्धिघटत एवेत्यर्थः यत्तु निरहन्तिं मन्यंते तेषां प्रत्यक्षमनुपलंभो दोषो दुःपरिहर इति भावः ४१ हृदयग्रंथिं चिद्चितोरात्मनस्ते

स्वस्त्यान निवर्त्तेनेन प्रवृत्तिर्नोपलभ्यते एवमेके वयं संतिनिर्वृत्तिरिति वापरे ४१ इत्थीदं हृदयग्रंथिं बुद्धिचित्तामयं हढं विमु
च्य तत्त्वमासीत विशोकश्छिन्नसंशयः ४२ नामेषु पवस्तां श्वभ्रीं मोहश्रोणीनदीं नराः यथा गाधमविद्वांसो बुद्धियो
गमयं तथा ४३ नैवतामन्तिविद्वांसः प्रवंनः पारमंमतः अध्यात्मविदुषा धीराज्ञानं तु परमं प्लवः ४४ नमवतिवि
दुषां महद्भयं यद्विदुषां तु महद्भयं भवेत् नहिगतिरधिकास्ति कस्य चित्सकृदुपदर्शयतीह तुल्यतां ४५

४१
स्तारात्म्यं बुद्धिस्तचिंताच तद्रूपमयं प्रवर्त्तत बुद्धिचिंतामयं ४३ श्वभ्रीं महतीं इमां संसाररूपां नदीं मनुप्रवुताः पतिताः गाधं तलं अविद्वांसः अज्ञानंतः एवं अयं
जीवः बुद्धियोगमनुवच्युतः नाम्येत् ४४ यथा विद्वद्विदुषोरंतरं एवं विदुषां मियः अंतरं नास्ती ताहनहीति नत्रहेतुः सकृदितिसकृद्विभातो ह्येषब्रह्मलोकइति
श्रुतिः पश्यपारं तिकृतं तारतम्यं मोक्षे नास्तीति दर्शयतीत्यर्थः ४५

एवंविदः फलमाह यदिति यत्त्वयं ज्ञानी विकुशेषं कर्म करोति यज्ञानेन पुरा ज्ञानात् पूर्वकाले कृतं तत्सर्वं एकतः एकेन ज्ञानेनैव दूषयति नाशयति तद्यथा पुष्करपला
शत्वापो न श्लिष्यंते एवमेवंविदि पापं कर्म न श्लिष्यते न यथैषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयंत इति श्रुतिभ्यां तत्त्वविदः क्रियमाणकर्मा
श्लेषपूर्वकर्मदाहयोरवगमात् दृष्टमपि फलमाह यत्त्वात्मानष्टशायां त्वयं त्वप्रियमनिष्टं प्रकृतं दूषयति यच्छुणोद्दिष्टेषात् सपं करोति तदुभयं त्वप्रियमिष्ट

पत्करोतिवद्दूदोषमेकृतलत्वद्दूषयतिपस्तुराकृतं नाप्रियं तदुभयं करोति सोयत्त्वदूषयतिपत्करोतिव ५६
शांतौ मोक्षधर्मेषु पांचभौतिकः युधिष्ठिर उवाच सुदुःखाह्वतुनसोश्ववसंतेज्ञातिनः सदा उभयं नो यथा
नस्यात्तन्मे ब्रूहि पितामह १ भीष्म उवाच अत्राप्युदाहरंतीममितिहासं पुरातनं नारदस्य च संवादं सम
गस्य च भारत २

गकारणात्मकं न करोति हेतुदर्शनाभावात् सपमदुष्टः पदोषमपि न पश्यतीत्यर्थः ५६ इति नैलकंठीये भारतभावदीपे शांतौ मोक्षधर्मेषु पांचभौ
तिकः शततोपरि दशमोध्यायः विहृत्य क्षणानि वक्तुमारभते सुदुः खेतिपामेवविहृत्य क्षणानि विघासाधनानीत्यभिप्रेत्य उभयं नोः स्माकं कथं केन
प्रकारेण स्यादिति प्रश्नः १ समंगं विद्वांसमुदाहृतनस्योत्तरमाह अत्रापीति २

भावेनभावो विद्यते ३



अमेषिरसानमंतिलंतुउरसाप्रणमसेसंतं विनीतोसीत्यर्थः बाहुभ्यांतरसीवभवनदीं अनंतंसंकटेपिनिरपेक्षोसीत्यर्थः एतन्मुखलिंगंज्ञानवतां ३ बालव
न्नरागद्वेषशून्यः ४ भवतोभिभयंवर्त्तमानंभयंगोपयेतिकर्त्तरिकृत्सः भूतभविष्ययोस्तत्त्वंचविद्यमानत्वं आत्मायंतेनेवयत्नात्प्रिवर्त्तमानेपितत्त्वेइतिनामेनवर्त्तमान
स्यापितत्त्वंनवेद्वियथोक्तंभगवतानासतोविद्यतेभावइति नहीदंजालिकंपरशितधनदृष्टिस्तस्माद्विहास्महीत्यर्थः ५ अमुपेत्यापिजगत्समस्तंत्वां

नारदउवाच उरसेवप्रणमसेबाहुभ्यांतरसीवच संप्रहृष्टमनानित्यंविशोकइवलक्ष्यसे ३ उद्वेगंनहितेकिंचित्सुसूक्ष्मम
पिलक्षये नित्यतृप्तइवस्वस्थोबालवच्चविचेष्टसे ४ समंगउवाच भूतंभव्यंभविष्यंचसर्वमेतन्नुमानद नैषांतत्त्वानिजा
नामिततोनविमनाह्यहं ५ उपक्रमानहंवेदपुनरेवफलोदयान् लोकेफलानिचित्राणिततोनविमनाह्यहं ६ अगा
धाश्चाप्रतिष्ठाश्चगतिमंतश्चनारद अंधाजडाश्चजीवंतिपश्यास्मानपिजीवतः ७ विहितेनैवजीवंतिअरोगांगादिवौ
कसः बलवंतोबलाश्चैवतस्मादस्मान्सभाजय ८

मानफलानिफलवैचित्र्यंचदुःखहेतुरेवेतिजानन्नपेतारंभादिरप्यहंनमुह्यामीत्याह उपक्रमानिति ६ नत्वानारंभेकथंजीवितव्यमित्याशंक्याह अगाधा
श्चेति अगाधाः निर्श्रयाः मूर्खाः गाधःप्रतिष्ठालिप्सयायोग्रेश्चेतिस्मृतेः अप्रतिष्ठाः धनदारादिशून्याः गतिमंतः ग्रंथधनादिमंतः जडाअन्मनाद्यः
अस्मान्निरारंभानपिजीवंतीत्यर्थः ७ कुतस्तेजीवंतीत्यतआहविहितेनैवेतिप्राक्कर्मणैवजीवंतिनत्वारंभादितिसभाजयपूजय ८

यदा वयं न शोचेम शोकमूलस्याज्ञानस्याभावात् तदा नः अस्माकं धर्मेणात्मनिग्राह्यरूपाद्यभ्यासोपजीविनाय ज्ञादिना वा कर्मणा लौकिकेन वा किं प्रयोजनं न किमपीत्यर्थः एतदु[illegible]चैतद्धि हांस आहुः कौषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे इति श्रुतेस्तत्त्वविदो न धर्माद्यनुतिष्ठंतीत्यर्थः शोकाभावे हेतुः कृतांतेति कृतांतवशगानि भूतानि वर्तंति यत् यस्मात् तस्मात् न धर्षयंति अस्मानिति शेषः १० यस्मात् मोहादिराहित्यं प्रज्ञायाः मूलं दुं

महद्धि रणोऽपि जीवंति जीवंति शशिनस्तथा शोकेन चामे जीवंति यस्मान्नापि जीवतः ९ यदा न शोचेमहि किंतु नः स्याद्धर्मेण वानार्द्र कर्मणा वा कृतांतवश्यानि यदा सुखानि दुःखानि वा यद्यपि धर्षयंति १० यस्मिन् प्राज्ञाः कथयं ते मनुष्याः प्रज्ञामूलो हीन्द्रियाणां प्रसादः मुह्यंति शोचंति तथेंद्रियाणि प्रज्ञालाभो नास्ति मूढेंद्रियस्य ११ मूढस्य दर्पः स पुनर्मोह एव मूढस्य नायं न परोऽस्ति लोकः न ह्येव दुःखानि सदा भवंति सुखस्य वा नित्यशो लाभ एव १२

न्द्रियाण्येव मुह्यंति शोचंतीति यस्मै प्राज्ञाः कथयंते तत्प्राज्ञ इत्यध्याहृत्य योज्यं हृष्यो मोहादिदृष्टस्य स्वबुद्धिरेवानेकभेदभिन्नस्याहंकारस्यैव धर्मो न त्वदृश्यस्य दृगात्मन इत्यर्थः ११ दर्पः श्लाघा अस्मीत्यादिरूपः सः मोहः स्वेत्काहानिरत आह मूढस्येति न हीति तस्मात् सुखादेरागमापायित्वात् सुख्यहमिति दर्पः दुःख्यहमिति दैन्यं च न कार्यमिति भावः १२

भयात्मकं संसाराख्यं भीतिपाठे रूपात्मकं संहारं माहृश: आत्मज: देहाभिमानशून्य: जातु कश्चिदपि चिंतनं कुर्वीत न तत्कुर्यात् तथा चक्षते: आत्मानं चे[illegible]दि
जानीयाहमस्मीति स्वरूप: किमिच्छन्कस्य कामाय शरीरमनुसंहरेदिति भोगाद्यचिंतनमेव विद्वत्वे हेतुरित्याह दृष्टानिति १३ अचिंतायामपि हेतु

भावात्मकं तं परिवर्जमानं न माहृश: संहरं जातु कुर्यात् दृष्टानुभोगाननागतांश्च नानुचिंतयेत्तु: स्वमभ्यागतं वा १३
समाहितो नस्त्वहयेत्सरेषां नानागतं चाभिनंदेच्च लाभं नवापिदृष्येद्विपुले यथा लाभेन तथार्थनाशे च न वै वि[illegible]षीदेत् १४ नवां
धवानच विनिं न कोल्सं न चक्षतं न च मंत्रान वीर्यं तु: लाभात्तु सर्व एव चात्महं तेपरत्वशीलेन नत्त्वपांतिशांतिं १५ नास्ति बुद्धि
रयुक्तस्य नायोगाद्विंदते सुखं धृतिश्चदु: खत्यागश्चैवानुभयं तु सुखं नप १६ प्रियं हि हर्षजननं हर्षोत्सेकवर्द्धनं उत्से
कोनरकायैव तस्मात्तान्संत्यजाम्यह १७

समाहितो योगारूढ: अचिंतना देवन सुहाशिमानभवतीत्यर्थ: परेषां सुखादीनूनेच्छेत् १४ समाहितत्वं च शमदमादि दृश्यतेण शीलेनैव भवति न वां
धवादिभिरित्याह नेति शांतिं निर्विकल्पितां १५ योगं विनाज्ञानं सुखं च नास्तीत्याह नास्तीति योगसाधनमाह धृतीति धृतिर्मन: प्राणेंद्रि
यक्रियाणां स्तंभसामर्थ्यं १६ योगश्च समर्थं लौकिकं प्रियं निंदति प्रियमिति उत्सेको दर्प: तान्प्रियहर्षोत्सेकान् १७

आश्वसेति छेदः श्वसदेहस्य श्वासविचेष्टनादिति संबंधः यावद्देहपातमित्यर्थः विमुक्तस्य तं विमुच्यते भूयश्चांते विश्वमायानिवृत्तिरिति श्रुतिभ्यां द्विर्मुक्तिनाम्या
निवृत्तिरिति श्रुतिभ्यां द्विर्मुक्तिमायानिवृत्तेः श्रुतिपादनात् नत्वविरा[illegible] मिंद्रजालतत्वविरामिव श्रावरणांश निवृत्तावपि विक्षेपांशानु
वृत्तिरस्तीति गम्यते सा च श्रुति विंबभ्रमादौ दृष्टांतेन जीवन्मुक्तिसिद्धिः रागद्वेषराहित्यसिद्धिश्च स्वस्य यथाज्ञानसमकालमेव देहपातापत्तिः यस्तु देहपातावधि

एतां छोकमयीमेकां मोहनाम्नुरत्नु: स्वयोः पश्यामि मामिवल्लोके देहस्यास्य विचेष्टनात् १८ अर्थकामौ परित्यज्य विशोको
विगतज्वरः तस्मान्मे हीनसंतप्तजश्चरामि पृथिवीमिमां १९ न च मृत्योर्न चाधर्मान्न लोभान्न कुतश्चन पीतामृतस्येवात्मन्त
मिह वामुत्र वा भयं २० एतद्ब्रह्मन् विजानामि महत्कृत्वा तपोऽव्ययं तेन नारद संप्राप्तो न मां शोकः प्रबाधते २१ शांतौ मोक्ष
धर्मेषु समंगनारदसंवादः

सास्त्विव न श्यति विषयेषु संगं च करोति तन्स्यजातमपि ज्ञानं न श्यतीति भावः यथोक्तं भगवता इंद्रियाणां हि चरतां यन्मनोऽनुविधीयते तदस्य हरति प्रज्ञां वायु
र्नावमिवांभसीति बुद्धिनाशात्प्रणश्यतीति च १९ इह वाऽमुत्र वा न भयमित्यन्वयः २० महत् ब्रह्म विजानामि अव्ययं तपः योगं कृत्वा संप्राप्तोऽपि
न प्रबाधते शीतोष्णादिनः शोको देहस्याभावादेव स्वरूपं प्राप्नोति न च मूढेष्विव बुद्धेषु तत्स्वातीव प्रतापोऽस्तीति भावः २२ इति नैलकंठीये भारतभाव
दीपे शांतौ मोक्षधर्मेषु समंगनारदसंवादे एकादशाधिकशततमः

मो॰
३५१

351

एतदुपदेशप्रधानां व्यवस्थितिं कृतां तामेवोपपत्तिप्राधान्येन जिज्ञासमानः पृच्छति एतत्तन्त्रस्य शास्त्राणामिति तत्र शास्त्रं तार्किकपाशुपतपांचरात्र
सांख्यपातंजलादीनि उपपत्तिप्रधानमुपदेशप्रधानं च तत्र वैदिके शास्त्रे पूर्वोत्तरमीमांसे उपदेशप्रधाने वैशेषिकतार्किकपाशुपतपांचरात्रसांख्य
पातंजलादीनि उपपत्तिप्रधानानि अवैदिकेऽपि लोकायतं शास्त्रमुपपत्तिप्रधानं आर्हतसौगते शास्त्रे बुद्धमुनिप्रणीतागमप्रधाने तत्रापि सौगतेषु चत्वा
रो भेदाः सौत्रांतिकवैभाषिकयोगाचारमाध्यमिकाः सर्वेऽप्येतानि विभिन्नप्रस्थानानि मोक्षार्थं च प्रवृत्तानि मोक्षस्त्वनान्यः पंथा विद्यतेऽयनायेति ए

युधिष्ठिर उवाच एतत्तन्त्रस्य शास्त्राणां सततं संशयात्मनः
अकृतव्यवसायस्य श्रेयो ब्रूहि पितामह १

कमार्गः श्रूयते सर्वेषु च शास्त्रेषु स्वमतेनैव मोक्षोऽस्ति न परमतेनेति स्वीयपक्षपातिप्रायेण विनिगमनाविरहान्नैतेषामन्यतमस्यैवैकस्य मध्यस्थमानुं शक्यं ना
प्येषामैकमत्यं वक्तुं शक्यं विभिन्नप्रस्थानतायाः स्पष्टत्वात् एकशास्त्रोपन्नेस्व अतः शास्त्राणां तत्त्वानवधारणात्संशयः किमुपादेयमिति ननु भि
यते हृदयग्रंथिश्छिद्यंते सर्वसंशया इति श्रुतेः आत्मानुभव एव संशयोच्छेदं करिष्यति किं शास्त्रमनपेक्षं काह अकृतव्यवसायस्येति अव्यवसायः आत्म
दर्शनार्थं शमदमाद्यनुष्ठानं तदकुर्वतः किं हितं स्यात्तद्ब्रूहि १

मा२

म॰
३५१

यद्यपि सर्वेषां नंधर्मिरणप्रांतं प्रकारे तु विपर्यय इति न्यायेन शरीरमात्मत्वग्रहणो मोक्षे तत्साधने शमादौ सर्वेषां शास्त्राणामैकमत्यमस्ति तथा हि स्थूलदेहात्मवादिनो माध्यमिक लोकायतिकाः संघातस्य तु क्षत्वं तत्सेवकत्वं तद्धर्माः अपत्वं च प्रथयितुमेव सदात्मानमपलपंतः एवं तार्किकादयोपि स्वहमर्थसेवकत्वादिकं प्रथयितुं विदात्मानमपलपंति अतो न तेषामात्मापलापे तात्पर्यं किंतु संघातादेः क्षत्वादौ तथा सांख्यान्यपि आत्मनोऽसंगत्वमेव प्रथयितुं प्रधानादिकं कल्पयंति न तु तेषामात्मनः कर्तृत्वप्रधानादिसत्त्वे चात्मभेदे वा तात्पर्यमस्ति एवं तत्रांतरतात्पर्यमप्यूह्यं सर्वेषामपि देहनाशो दुःखनाशो वा निर्विषयज्ञानधारा वा चित्तनिरोधमात्रं वा परमानंदो वा मोक्ष

श्रीभगवानुवाच गुरुशुश्रूषणं सततं वृद्धानां पर्युपासनं श्र
वणं चैव शास्त्राणां कूटस्थं श्रेय उच्यते २

इति शब्दजनितकस्मात्वं तु बुभुत्सवन् द्वैतदर्शनाभावः सर्वेषां मोक्षे तु तस्य शमादीनां साधनत्वं च व्यावहारिकप्रक्रियाणां चात्मतत्त्वप्रतिपादनप्रकारभेदानां च तेषां परस्परविरोधान्नैकशास्त्रं विधिमुखेनैव च स्वस्वं दर्शनं दैकारसं ब्रह्म वेदांताः निषेधमुखेन प्रतिपादयंतीति तेषामेव श्रेष्ठत्वं च स्पष्टं तथापि सर्वशास्त्राविरोधेनैवोक्तस्माह गुरुपूजेति गुरुपूजा च ईश्वरे चेतःप्रणिधानं तस्यैव परमगुरुत्वात् स पूर्वेषामपि गुरुः कालेनानवच्छेदादिति तस्य पातंजले परमगुरुत्वोक्तेः वृद्धानामाचार्याणां। तथा च यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मन इति श्रुत्यर्थदर्शिनः शास्त्राणां चाविशेषात् सर्वेषां सर्वत्र मोक्षस्य प्रतिपादनात् श्रवणं गुरुमुखेन ग्रहणं एतच्च मनननिदिध्यासनयोरप्युपलक्षणं गुरुदेवपूजाश्रवणादित्रयं च कूटस्थं चाविकारि आत्यंतिकमैकांतिकं च परं श्रेयः तद्रूपं तत्साधनत्वादुच्यते २

वीतेति जितेंद्रियः श्रेयस्का मइतिचशिष्यलक्षणं शेषंगुरुलक्षणं ४ भवंतित्वयिञ्चनपगानृष्यिराव ५ लोकतत्वंश्चा त्मयाथात्म्यं ६ अज्ञानमेवाहहानेहीति
कार्याणांतत्तत्स्थाद्देोदितकर्तव्यानं चैसवंदनतमशिलारोहणकृच्छ्रचांद्रायणाग्निहोत्रादीनांश्चविशेषतः इदंश्रेयइदंनेतिविशेषावधारणहेतुभावेनसाम्या
त्सर्वंसमेवप्रवृत्तिःस्यात् ततश्चपरस्परविरुद्धधर्मद्वयाचरणादुभयभ्रष्टः स्यादित्यर्थः अततेषांकार्याणांमध्येयत्त्वस्माकंकार्यंकर्तुमुचितंतत्त्वमवस्याभः न

अत्राप्युदाहरंतीममितिहासंपुरातनं गालवस्यचसंवादंदेवर्षेर्नारदस्यच ३ वीतमोहक्लमंविप्रंज्ञानतृप्तंजितेंद्रियं श्रेयस्कामंयता
त्मानंनारदंगालवोब्रवीत् ४ यैःकैश्चित्संमतोलोकेगुणैस्तुपुरुषोमुने भवत्स्वनपगान्सर्वांस्तान्गुणांल्लक्षयामहे ५ भवानेवंवि
धोस्माकंसंशयंछेत्तुमर्हति अमूढश्चिरमूढानांलोकतत्वमजानतां ६ ज्ञानेह्येवंप्रवृत्तिःस्यात्कार्याणामविशेषतः यत्कार्यंनव्यव
स्यामस्तद्भवान्वक्तुमर्हति ७ भगवन्नाश्रमाःसर्वेपृथगाचारदर्शिनः इदंश्रेयइदंश्रेयइतिसर्वेप्रबोधिताः ८

निश्चितुमः सर्वत्रश्रेयोबुद्धिसाम्यात् अतः भवान्विशेषदर्शीतद्वक्तुमर्हति ७ एतदेवाहभगवन्निति आश्रमाः नास्तिश्रमोऽनुष्ठानजोयस्मिन्नितमाश्रमं
तानं तत्रमेसाधकाः आश्रमाः पाखण्डानिष्पक्वाचारप्रवर्त्तकंदर्शयितुंशीलंयेषांतेपृथगाचारदर्शिनः तैराश्रमैः सर्वेनराः प्रबोधिताः ८

नानामार्गेणाधिनानाविधेन मार्गेण व्यवस्थितान् शास्त्राभिनंदिनः स्वे स्वे शास्त्रे अभिनानंदितुं शीलं येषां तान् दृष्ट्वा यथा वयं स्वशास्त्रैः परितुष्टास्तथा नानापि दृष्ट्वा संदिहानाः सन्तः
श्रेयः प्रशस्ततरं नोपलभामहे न निश्चेतुं समर्थाः स्मः १० कलिलं नानाशंकाकुलं च धीहि त्वं अध्यापय ११ आश्रमाः शास्त्राणि चत्वारि तत्र धर्मो नाम्नेवैनेकं शास्त्रं तत्र
वैदिकः शाक्यादिकल्पितश्चेव मवंदनादि धर्मो नाम इत्यपरं वेदोक्त एव धर्मो नाम इति तेषां धर्माधर्मौ नीतां तं वल्कमात्र मलीनि चतुर्थं यथा संकल्पिताः संकल्पितं संकल्पं च

नानाविधव्यवस्थितान् दृष्ट्वा शास्त्रैः शास्त्राभिनंदिनः स्वशास्त्रैः परितुष्टांश्च श्रेयो नोपलभामहे ९ शास्त्रं यदि भवेदेकं श्रेयो व्यक्तं भवेत्तदा शा
स्त्रैश्च बहुभिर्भूयः श्रेयो गुह्यं प्रवेशितं १० एतस्मात्कारणाद्भूयः कलिलं प्रतिभाति मे ब्रवीतु भगवांस्तन्मे उपसन्नोऽस्म्यधीहि भो ११
नारद उवाच आश्रमास्तात चत्वारो यथा संकल्पिताः पृथक् तान्सर्वाननुपश्यस्व समाश्रित्य निगालव १२ तेषां तेषां तथा हि त्वमाश्र
माणां ततस्ततः नानारूपं गुणोद्देशं पश्य विधिस्थितं पृथक् १३

नतिक्रांताः पोयेन श्रेयस्तेन भावितरजसं देवश्रेय इत्यर्थः तथा च श्रुतिः तं यथा यथोपासते तदेव भवतीति संकल्पानुसारेण फलं दर्शयति तान् समाश्रित्य अनु
पश्य गुरुभ्योऽधिगम्य सम्यगालोचय एतान् बुद्ध्या आलोचयन् स्वयमेवैतेषु प्रशस्तं यत्तत् ज्ञास्यसीति भावः १२ गुणोद्देशं आत्मज्ञानं गुणभूतानां धर्माणामुद्देशं सं
कीर्तनं पृथक् विरुद्धेन प्रकारेण व्यवस्थितं यथा परेषां तप्तशिलारोहणादिर्धर्मः स एवास्माकमधर्मः यथा वास्माकं अग्नीषोमीयपश्वालंभो धर्मः स एव परेषामधर्म इत्यर्थः
१३

नेति नेच्छाश्रमाः स्थूलदृष्ट्यानिरीक्षमाणाः सम्यकृत्यमिषितंधर्मेच्चात्मततंवानयंतिनप्रापयंति तेषामेवपरांगतिंअमेसूक्ष्मदृशः कृजुपथास्मात्तथाऽपश्यन्नात्मक
रीत्याफलसाधनयोःसर्वत्राविगानात् १४ एतदेवाह यत्त्विति मित्राणांसर्वभूतानामपश्चानांअनुग्रहंअमित्राणांहिंस्राणांचनिग्रहंश्रेयआहुरित्यग्रिमेणान्वयः

नयांतिवैश्वनेतमन्मार्गमिश्रेतमसंशयं अनुपश्यंस्तथात्मानमात्मनाणांपरांगतिं १४ यत्तुनिःश्रेयसंसम्यक्कृतचैवात्मशयात्मकं अनुग्रहं
चमित्राणाममित्राणांचनिग्रहं १५ संग्रहंचत्रिवर्गस्यश्रेयआहुर्मनीषिणः निवृत्तिःकर्मणःपापात्सततंपुण्यशीलता १६ सद्भिश्चस
मुदाचारःश्रेयएतदसंशयं मार्दवंसर्वभूतेषुव्यवहारेषुचार्जवं १७ वाक्चैवमधुराप्रोक्ताश्रेयएतदसंशयं देवतेभ्यःपितृभ्यश्चसंविभागो
तिथिष्वपि १८ असंत्यागश्चभृत्यानांश्रेयएतदसंशयं सत्यस्यवचनंश्रेयःसत्यज्ञानंतुदुष्करं १९ यद्भूतहितमत्यंतमेतत्सत्यंब्रवीम्य
हं अहंकारस्यचत्यागःप्रमादस्यचनिग्रहः २० संतोषश्चैकचर्याचकूटस्थंश्रेयउच्यते धर्मेणवेदाध्ययनंवेदांतानांतथैवच २१
ज्ञानार्थानांचजिज्ञासाश्रेयएतदसंशयं शब्दरूपरसस्पर्शान्सहगंधेनकेवलान् २२

हिंस्रनिग्रहसश्रेयत्वोक्त्याहिंस्रस्यतत्सातिनिषेधत्वमुक्तं १७ सर्वतंत्रसाधारणधर्मप्रसंगात्वैदिकंधर्ममाहदेवतेभ्यइत्यर्द्धेन १८ सत्यस्यत्वबाधितात्मतत्त्वस्य
वचनंश्रवणादिकं सत्यंसम्यमापकं २१ जिज्ञासाअनुभवेच्छा २२

अतियोगं आहारादीनां यथोक्तं नात्यश्नतस्तु योगोस्ति नचैकान्तमनश्नतः नचातिस्वप्नशीलस्य जाग्रतो नैव चार्जुनेति २४ आत्मेति विप्रकर्षमुत्कर्षं नीचादुत्कर्षं नेच्छे
न्न अपि तु न्याय्ये वेति भावः २५ आत्मनो गुणाः स्वयमैश्वर्येण तद्भयात् गुणान्स्वपादिति सग्राह्यान् क्षिपंतीति निंदति २६ अनूच्यमानाः शिक्ष्यमाणाः २७ विपश्चिद्गुणाः

नात्यर्थमुपसेवेत श्रेयसोर्थी कथंचन नक्तंचर्यां दिवास्वप्नमालस्यं पैशुनं मदं अतियोगमयोगं च श्रेयसोर्थी परित्यजेत् २४ आत्मोत्क
र्षं न मार्गेत परेषां परिनिंदया स्वगुणैरेव मार्गेत विप्रकर्षं पृथग्जनात् २५ निर्गुणास्त्वेव भूयिष्ठमात्मसंभाविता नराः दोषैरन्यान्गुणवतः
क्षिपंत्यात्मगुणक्षयात् २६ अनूच्यमानास्तु पुनस्ते मन्यंते महाजनात् गुणवत्तरमात्मानं स्वेन मानेन दर्पिताः २७ अब्रुवन्कस्य
चिन्निंदामात्मपूजामवर्णयन् विपश्चिद्गुणसंपन्नः प्राप्नोत्येव महद्यशः २८ अब्रुवन्वाति सुरभिर्गंधः सुमनसां शुचिः तथैवाव्याहरन्
भाति विमलो भानुरंबरे २९ एवमादीनि चान्यानि परित्यक्तानि मेधया ज्वलंति यशसा लोके यानि न व्याहरंति च ३० न लोके दीप्यते मूर्खः
केवलात्मप्रशंसया अपि चापिहितः श्वभ्रे कृतविद्यः प्रकाशते ३१ असदुच्चैरपि प्रोक्तः शब्दः समुपशाम्यति दीप्यते त्वेव लोकेषु शनैर
पि सुभाषितं ३२

अद्वेष्टा सर्वभूतानामित्यादयः महद्यशो ब्रह्म न तस्येशे कश्चन तस्य नाम महद्यश इति श्रुतिप्रसिद्धेः ३१ असत् सारवर्जितं यथा स्यात्तथा प्रोक्तः ३२

मूढानामिति यथासूर्यः सूर्यकांतयोगात्स्वस्याग्निरूपत्वंदर्शयति एवंस्वस्वज्ञोपिकुशब्दयोगात्स्वरूपमंतरात्मानंदर्शयतीत्यर्थः ३३ मृगयंतेश्रेयोर्थिनः पृथग्वि
धान्नानाश्रमभेदभिन्नान् ३५ वासंपरिक्लेशेनवस्तुमिच्छेत् ३६ व्यतिकरःसंकरः ३७ स्वाश्रुपातसंगमात्रेणैवेत्यर्थः ३८ अत्रदृष्टांतमाहस्त्र्यन्नपानमिति स्त्र्य
वादीनांसंगमात्रंयथाशीतोष्णसुखदुःखदंतथासदसत्संगएवपुण्यपापदइत्यर्थः ३९ विषयंविषयमनुवर्त्ततइत्यनुविषयोरसः तंत्वपश्यंतःइदंमधुरमि

मूढानामवलिप्तानामसारंभाषितंवचः दर्शयत्यंतरात्मानमग्निरूपमिवांशुमान् ३३ एतस्मात्कारणात्प्राज्ञांमृगयंतेपृथग्विधाः प्रज्ञा
लाभोहिभूतानामुत्तमः प्रतिभातिमे ३४ नापृष्टःकस्यचिद्ब्रूयान्नाप्यन्यायेनपृच्छतः ज्ञानवानपिमेधावीजडवत्समुपाविशेत् ३५
ततोवासंपरिक्लेशेनधर्मनित्येषुसाधुषु मनुष्येषुवदान्येषुस्वधर्मनिरतेषुच ३६ चतुर्णांयत्रवर्णानांधर्मव्यतिकरोभवेत् नतत्रवासं
कुर्वीतश्रेयोर्थीवैकथंचन ३७ निरारंभोप्ययमिहयथालब्धोपजीवनः पुण्यंपुण्येषुविमलंपापंपापेषुचाप्नुयात् ३८ अपामग्ने
स्तथेंदोश्चस्पर्शंवेदयतेयथा तथापश्यामहेस्पर्शमुभयोःपुण्यपापयोः ३९ अपश्यंतोनुविषयंभुंजतेविघसाशिनः भुंजाना
स्वात्मविषयाविषयाविद्धिकर्मणा ४०

दंतिक्रमितमनालोचयंतः केवलंगर्त्तपूरणमात्रार्थंभुंजतेविघसोदेवतादिशेषंतद्शनशीलाः शिष्टाः येतुस्वात्मविषयानबुद्धेर्विशेषतोवंधकान्रसविशेषा
न्परीक्षापूर्वकंभुंजतेतान्कर्मणांविषयान्कर्मपाशगोचरान्विद्धि इंद्रियपोषकाणांकदाचिदपिनसंसारोपरमसंभावनास्तीत्यर्थः ४०

गुरुशिष्यधर्मेणाहूयत्नेनादिना आगमंश्रमाणंनंतानमात्मनः इच्छतां आगमयमानानांकवंतसरूपं ४२ आकाशस्थाः निरालंबनाः अविद्यमानान् दोषा

यत्रागमयमानानामसत्कारेण पृच्छतां यन्नपाद्यासनेणोधर्मंसजेन्नदेशमात्मवान् ४१ शिष्योपाध्यायिकाहृतिर्यत्रस्यात्तुसमाहिता य
यावच्छाहृतं पत्राकृत्तं देशं परित्यजेत् ४२ आकाशस्याक्रवंयत्रदोषंभूयोविपश्चितो आत्मपूजाभिकामो वै कोवसेत्तत्रपंडितः ४३
यत्रसंतोडितास्तु बौद्धैः पापसेधर्मसेतवः प्रदीप्तमिव चैलां तं कृत्स्नं देशं न संत्यजेत् ४४ यत्रधर्ममनाशंकास्वरेषु वीतमत्सराः भवेन्न
त्वसेत्तैवपुण्यपशीलेषु साधुषु ४५ धर्ममर्थनिमित्तं वचरेश्रयंयत्रमानवाः न तान नुवसेज्ञातु ते हि पापकृतो जनाः ४६ कर्मणा यत्रपा
पेन वर्तंते जीविते सवः अवधार्येनतत्तूर्णं सत्सर्पोच्छरणादिव ४७ येनतल्लूतसमारूढः कर्मणानुशयी भवेत् आदितस्तन्न कर्तव्य
मिच्छता भवमात्मनः ४८ यत्र राजा च राजत्त्वं सुपूरुषाः प्रसन्नंतराः कुटुंबिनामयप्रभुतस्तत्रनेत्राभूमात्मवान् ४९ ग्रोचियास्त्वय
भोक्तारो धर्मनिताः सनातनाः याजनाध्यापने युक्ता यत्र तत्र भूमा वसेत् ५०

नव्रयुंइनसर्थः ४३ संतोडिताः आकुलीकृताः ४४ भवेत्तत्र सन्निहितः ४५ कामनिषिद्धे निरंतरि धर्मं मिति ह्याभ्यां ४७ अनुशयी पूर्वकर्मवासनावा
नुखद्धारूढः तीव्रदुःखयुक्तः ५०

तपस्तप्तंसविधं ५२ आत्मवान्जितचित्तः ५४ येशांतेषुउपसृष्टाःसंक्रोधालेषुयेचसाधुषुदुराचारेषु ५५ कामान्विषयाभिलाषान् कामेशःसर्वसंपत्ति
मान् ५६ विषयवासिनःस्वदेशसान् प्रत्युपस्थितेपतीयतेनोपस्थितेहीयमानेसतीत्यर्थः ५७ प्रधानेनप्राधान्येनसंख्यातुंकीर्तयितुं ५८ एवंत्वनपा

स्वाहास्वधावषट्काराणयत्रसम्यगनुष्ठिताः अजस्रंचैववर्तंतेवसेत्तत्राविचारयन् ५१ अशुचीनत्रपश्येतब्राह्मणान्ब्रह्मविकर्षितान् तत्रे
तद्राष्ट्रमासन्नमुपतप्तमिवाग्निवं ५२ प्रीयमाणानरायत्रप्रयच्छेयुरयाचिताः स्वस्थचित्तोवसेत्तत्रकृतकृत्यमिवात्मवान् ५३ दंडोयत्रा
विनीतेषुसत्कारश्चकृतात्मसु चरेत्तत्रवसेच्चैवपुण्यशीलेषुसाधुषु ५४ उपसृष्टेषुदांतेषुदुराचारेष्वसाधुषु अविनीतेषुलुब्धेषुसुमह
द्दंडधारणं ५५ यत्रराजाधर्मनित्योराज्यंधर्मेणपालयेत् अपास्यकामान्कामेशोवसेत्तत्राविचारयन् ५६ तथाशीलाहिराजा
नःसर्वविषयवासिनः श्रेयसायोजयंत्याशुश्रेयसिप्रत्युपस्थिते ५७ पृष्टस्त्वमयातातश्रेयएतदुदाहृतं नहिशक्यंप्रधानेनश्रेयः
संख्यातुमात्मनः ५८ एवंप्रवर्तमानस्यवृत्तिंस्त्रिग्धहितात्मनः तपसैवेहबहुलंश्रेयोव्यक्तंभविष्यति ५९ शांतोमोक्षधर्मेषुश्रे
योवाधिकोनाम

द्विशाहृतिर्नीतिकास्तुद्विश्यतपसास्वधर्मेणप्रणिहितित्रात्माचित्तंयस्यपाठांतरेप्रणिहितःसमाहितः आत्माचित्तंयस्यबहुलंश्रेयोमोक्षाख्यं ५९ शा
नोपरिष्ठादशः ॥

सर्वतंत्रसाधारणानहिंसाप्रधानान्मोक्षधर्मान्कृत्वाराज्ञांतदनुष्ठानंदुःशकमितिमत्वानःश्रेयस्करंकथमिति १ सर्वसामान्यंभावयन्नेवसंगपाशाद्विमुच्यतइ
तिवक्तुंआख्यायिकामवतारयन्नाहअत्रेति ३ संपदंउपदेशयोग्यतांश्रियं ४ सक्तेति सक्ताविषयनिमग्नासाचासौबुद्धिश्च अशांतश्चासौआत्माचतस्याकुलं

युधिष्ठिरउवाच कथंनुमुक्तःपृथिवींचरेदस्मद्विधोनृपः नित्यंकैर्वागुणैर्युक्तःसंगपाशाद्विमुच्यते १ भीष्मउवाच अत्रतेवर्तयिष्ये
हमितिहासंपुरातनं अरिष्टनेमिनाप्रोक्तंसगरायानुपृछते २ सगरउवाच किंश्रेयःपरमंब्रह्मन्कृत्वेहसुखमश्नुते कथंनशोचेन्न
क्षुभ्येदेतदिच्छामिवेदितुं ३ भीष्मउवाच एवमुक्तस्तदातार्क्ष्यःसर्वशास्त्रविदांवरः विबुध्यसंपदंचाग्र्यांसद्वाक्यमिदमब्रवीत् ४ सु
खंमोक्षसुखंलोकेनचमूढोवगछति प्रसक्तःपुत्रपशुषुधनधान्यसमाकुलः ५ सक्तबुद्धिरशांतात्मानशक्यंतच्चिकित्सितुं स्ने
हपाशसितोमूढोनसमोक्षायकल्पते ६ स्नेहजानीहतेपाशान्वक्ष्यामिशृणुतान्मम सकर्णकेनशिरसाशक्याःछेत्तुंवि
जानता ७ संभाव्यपुत्रान्कालेनयौवनस्थान्निवेश्यच समर्थान्जीवनेज्ञात्वामुक्तश्चरयथासुखं ८

मनःतत्हृदयंचिकित्सितुमशक्यंपाशान्तरैस्पष्टार्थः सितोबद्धः ६ सकर्णकेनशिरसेतेनश्रोत्राभ्यांयद्धाभ्यांसावधानेनजीवनेसमर्थोलक्ष्यते ७ नि
वेश्यदारैःसंयोज्य ८

परार्थं यं तिमं पुरुषार्थं मोक्षं भजन हि मज ९ कृतकौतूहलः छिन्नौत्सुक्यः कुहिंसायां मादिः तस्यानिष्टायां कृतमिति हृष्यं १० उपपन्ना यदृच्छया उपलब्धेषु लोकेषु विष
येषु रागद्वेषहीनः ११ एवं भोगरहवर्जकः नायं मोक्षार्थी मोक्षप्रयोजनः १२ मुक्ताः छिन्नग्रंथयः पाशाः सक्तभावाः विषयासक्तचित्ताः १३ उक्तेर्थे दृष्टांतमाह आ
हारेति आहारं संचिन्वंति संगृह्णंति तादृशाः कीटाः येन नश्यंति न तु तं संग्रहिणः इत्यर्थः १४ ननु वृद्धौ च माता पिता एते साध्वी भार्या सुतः शिशुः अप्यकार्यशतं

भार्यां पुत्रवतीं वृद्धां लालितां पुत्रवत्सलां ज्ञात्वा पत्न्याहि कालेन परार्थमनुदर्शय ९ सा यत्नो निरपत्नो वा यदृच्छया यथासुखं इं
द्रियैरिंद्रियार्थांस्त्वमनुभूय यथाविधि १० कृतकौतूहलस्तेषु मुक्तः स्वच्छया यथासुखम् उपपन्नोपलब्धेषु लाभेषु च समो भव ११
एवं तावत्समासेन नव संकीर्तितो मया मोक्षार्थो विस्तरेणाथ भूयो वक्ष्यामि तच्छृणु १२ मुक्ता वीतभया लोके चरंति सुखिनो
नराः सक्तभावा विनश्यंति नरास्त्वत्र न संशयः १३ आहारसंचयाश्चैव तथा कीटपिपीलिकाः असक्ताः सुखिनो लोके स
क्ताश्चैव विनाशिनः १४ स्वजनेन च ते चिंता कर्तव्या मोक्षबुद्धिना इमे मया विना भूता भविष्यंति कथं त्विति १५

कृत्वा मन्तव्या मनुष्येब्रवीदिति स्मृतेः संग्रहं विना कथं मात्रादिजीवनं स्यादिति आशंक्याह स्वजनेनेति त्रिभिः यथा अन्नसस्यादिकं न तत्कर्माधीनं एवं भोजनादिक
मपीति मात्रादिविषये चिंता न कार्येत्यर्थः मात्रा पित्रा कृतेन स्वकृतेन वा संग्रहं अधिगच्छंतीति योजना। १५

धात्रा शक्कर्मफलविभाजकेन १९ तस्मात्किंचित्कारत्वादपिमात्रादिपोषणेविनानकार्यमित्याहस्वयमित्यादिनाघ्रहृठेतिखेदः २१ जीवंतमिति भरणेनत्रे
रक्षणेनगृहादौ अत्समाप्तेपिवत्सान्नाद्येनभर्त्रारंजीवंतमपिपरित्यज्यस्वकर्मतोवयथाभार्यादिर्म्रियते पश्चात्तदुभयनाशादूर्ध्वमपितथैवमरिष्यत्येवेत्यर्थः

त्वयमुत्पद्यतेजंतुः स्वयमेवविवर्द्धते सुखदुःखेतथामृत्युंस्वयमेवाधिगच्छति १६ भोजनाच्छादनेचैवमातापित्राचसंग्रहं
स्वकृतेनाधिगच्छंतिलोकेनास्त्यकृतंपुरा १८ धात्राविहितभक्ष्याणिसर्वभूतानिमेदिनीं लोकेविपरिधावंतिरक्षितानिस्व
कर्मभिः १९ स्वयंप्रकृतिंउभूतस्यपरतंत्रस्यसर्वदा कोहेतुःस्वजनंपोष्टुंरक्षितुंवात्र्हतात्मनः २० स्वजनंहिपराम्नतुहंत्येव
नचपश्यतः कृतेपियत्नेमहतिनत्रबोद्धुमर्हात्मना २१ जीवंतमपिचैवैनंभरणेरक्षणेनया अत्समाप्तेपरित्यज्यपश्चाद
पिमरिष्यसि २२ यत्रागतश्चस्वजनंनतत्रास्मिकदाचन सुखितंदुःखितंवापिनत्रबोद्धुमर्हात्मना २३ मृतेवाजतिपि
जीवेवापरायोत्पतिवैजनः स्वकृतंनतुभुंक्तेवैकर्तव्यंहितमात्मनः २४

२२ यदेतिमृतंदेशांतरस्थंवास्वजनंसुखितंदुःखितंवानत्वास्मितिनाप्युपकरिष्यसियथाएवंत्वात्मनाइदंबोद्धुंमामपिमृतंदेशांतरगतंपुत्रा
दयोनत्वास्यंनोपकरिष्यंतीति २३ अतस्त्वमिदमुक्तंत्वपिमृतेवाजीवतिवाजनःपुत्रादिःस्वकृतंजरारोगादिकंभोक्ष्यतित्वंचनतद्दूरीकर्तुंशक्तो
सि १ एवममेपितवेतिवुद्ध्या २५

२५ यस्य देहिनः येन पुंसा सत्त्ववान् सत्त्वाधिकः २६ द्यूतेऽस्मादयः सामीप्ये सम्यक् न प्रमाद्यति आत्मानं विस्मृत्य तत्राभिनिविष्टो न भवति २७ क्रियमाणमहं भोक्त-
व्यं क्रियत्स्यति एवं भोक्तव्यमिति यो भोगात् खिन्नः २८ आत्मेति आत्मभावं चित्तस्य स्वभावं स्त्रीषु विषयभूतासु उक्तं स्वाभिलाषाद्याहृत्य सक्तमिति पाठे सक्तं संगः तं
भावे निष्ठा आत्मनः भवनं भावः जन्म स्त्रीसंगं जन्महेतुत्वेन यः पश्यति अस्मर्थः युक्तः सावधानः २९ संभवमिति जन्ममरणजीवनक्लेशं जन्मोमुच्यत इत्यर्थः ३०

एवं विज्ञानं लोकेऽस्मिन् कः कस्मिन्नभिनिश्चितः मोक्षे निवेशयन्मनो भूयश्चाप्युपधारय २५ श्रुतिमिच्छामि योऽभावाज्जितात्मा यस्य देहिनः
क्रोधो लोभस्तथा मोहः सत्त्ववान्मुक्त एव सः २६ द्यूतपानेषु स्त्रीषु मृगयायां च यो नरः न प्रमाद्यति संमोहात् सततं मुक्त एव सः २७
दिवसे दिवसे नाम रात्रौ रात्रौ पुमानसौ भोक्तव्यमिति यः खिन्नो दोषबुद्धिः स उच्यते २८ आत्मभावं तथा स्त्रीषु मुक्तमेवं पुनः पुनः
यः पश्यति सदा युक्तो यथावन्मुक्त एव सः २९ संभवं च विनाशं च भूतानां चेष्टितं तथा यस्तत्त्वतो विजानाति लोकेऽस्मिन्मुक्त एव सः
३० प्रस्थं वाहसहस्रेषु यात्रार्थं चैव कोटिषु प्रासादे मंचकं स्थानं यः पश्यति स मुच्यते ३१

वाहः धान्यं द्रोणशकरसहस्रेषु कोटिष्विति स्थानाधिकरणं मत्स्यं पुरुषाहारपरिमितं धान्यं यद्वा पंचकृष्णलकौ माषः तेषां षोडश पलं तानि सार्धं चत्वारि दश प्रस्थः प्र-
स्थशतं आढकः तेषां शतद्वयं द्रोणः कुतश्चित् दशशतं दश वाहः इति यात्रार्थं देहव्यवहारार्थं अधिकमसंग्रहो न सर्वमिति यः पश्यति ३१

अशन्तिर्जीविकाशास्त्रभावः ३२ नपश्यन्निमेकं पदं मृत्युनाभ्याहतं लोकमित्यनुकृष्यते ३३ अग्नीषोमाविति अग्निर्जाठरो भोक्ता सोमोऽन्नं भोज्यं अहं तु

मृत्युनाभ्याहतं लोकं आधिभिश्चोपपीडितं अशन्तिकं तं चैव यः पश्यति स मुच्यते ३२ यः पश्यति समं तुष्टो न पश्यंश्च विहन्यते य
श्चापसनसंतुष्टो लोकेऽस्मिन्मुक्त एव सः ३३ अग्नीषोमाविदं सर्वमिति यश्चानुपश्यति न च संस्पृश्यते भावैरद्भुतैर्मुक्त एव सः ३४
पर्यंकशय्याभूमिश्च समानि यस्य देहिनः शालयश्च कदन्नं च यस्य स्यान्मुक्त एव सः ३५ क्षौमं च कुशचीरं च कौशेयं वल्कलानि च
आविकं चर्म च समं यस्य स्यान्मुक्त एव सः ३६ पंचभूतसमुद्भूतं लोकं यश्चानुपश्यति न याच वर्तते दृष्ट्वा लोकेऽस्मिन्मुक्त एव सः
३७ सुखदुःखे समे यस्य लाभालाभौ जयाजयौ इच्छाद्वेषौ भयोद्वेगौ सर्वथा मुक्त एव सः ३८ रक्तमूत्रपुरीषाणां दोषाणां सं
चयांस्तथा शरीरं दोषबहुलं दृष्ट्वा चैव विमुच्यते ३९ वलीपलितसंयोगं कार्श्यं वैवर्ण्यमेव च कुब्जभावं च जरया यः पश्यति
समुच्यते ४० पुंस्त्वोपघातं कालेन दर्शनोपरमं तथा बाधिर्यं प्राणमंदत्वं यः पश्यति स मुच्यते ४१

नतोऽन्य इति यो नु पश्यति स भावैः सुखदुःखादिभिरद्भुतैर्मायिकैः न संस्पृश्यते संगवान्न भवति ३४ क्षौमं अतसीसूत्रमयं कुशचीरं तृणवस्त्रं कौशेयं कोश
जं आविकं कंबलं ३६ न याच सामर्थ्ये न समर्थः ४० प्राणोमंदत्वं दोषेस ४१

४२ मोक्षजैः ज्ञानजैः स्वदृष्टत्वादिभिः ४८ शतोपाध्यायोदशः एवं रागद्वेषहीनः वीतसंगो मुच्यत इत्युक्तं संगदोषात् जन्मना महानपि स्वधोगतिं स्वर्गमार्गप्रतिबंधं च लः

गतान्पार्थिवान्देवानसुरांश्च तथागतान् लोकादस्मात्परं लोकं यः पश्यति स मुच्यते ४१ प्रभावैरन्वितांस्तैस्तैः पार्थिवेन्द्रान् सहस्रशः ये
गताः पृथिवीं त्यक्त्वा इति ज्ञात्वा विमुच्यते ४२ अर्थांश्च दुर्लभांल्लोके क्लेशांश्च सुलभांस्तथा दुःखं चैव कुटुंबार्थे यः पश्यति स मुच्य
ते ४४ अपत्यानां च वैगुण्यं जनं विगुणमेव च पश्यन् भूयिष्ठशो लोके को मोक्षं नाभिपूजयेत् ४५ शास्त्राज्ज्ञानाच्च यो बुद्ध्वः सर्वं
पश्यति मानवः असारमिव मानुष्यं सर्वथा मुक्त एव सः ४६ एतच्छ्रुत्वा मम वचो भवांश्चरतु मुक्तवत् गार्हस्थ्येपदिवामोक्षेकृ
तात्वुद्धिर्विकृवा ४७ तत्तस्य वचनं श्रुत्वा सम्यक् स पृथिवीपतिः मोक्षजैश्च गुणैर्युक्तः पालयामास च प्रजाः ४८ शांतौ मोक्षध
र्मे पुत्रमगराजिष्ठनेमिसंवादः युधिष्ठिर उवाच तिष्ठते मे सदा तात कौतूहलमिदं हृदि तदहं श्रोतुमिच्छामि त्वत्तः कुरुपितामह
१ कथं देवर्षिरुशना सदा काव्यो महामतिः असुराणां प्रियकरः सुराणामप्रियेरतः २ वर्द्धयामास तेजश्च किमर्थममितौजसां
नित्यं वैरनिबद्धाश्च दानवाः सुरसत्तमैः ३

मतेश्चेति वक्तुमुशनोपाख्यानं प्रस्तूयते तिष्ठते इति स्थेयार्थात् आत्मनेपदं कौतूहलं आश्चर्यं चिरकालं मम हृदि वर्त्तत इत्यर्थः २ वर्द्धयामास चिच्छेद अमितौज
तां देवानां ३

शुक्रत्वं शुक्रो ऽभवत् ॥ ४ ॥ नेति ॥ तस्याकाशगतिः कुतः कुंठितेत्यर्थः समर्पितवान् देहं स्वं एणास्थितः स शुक्रस्य भूम्युर्मूर्ध्नि विषय एवायं प्रश्नो न भवत्कस्य मूर्ध्नि विषयः ते
न पप्रच्छ भीष्म मान्यानां वसिष्ठादीनां स्वर्गे ऽपि गतिरप्रतिहतैवं भीमस्य शुक्रस्यापीति निगम्यते ॥ ६ ॥ कारणाक्रियातहात्मके निमित्ते सति एवं हि पाल्यायनेः सुरः किल देवानामपि

कथं चाप्युशनाः प्राप शुक्रत्वममरद्युतिः । ऋद्धिं च स कथं प्राप्तः सर्वमेतद् ब्रवीहि मे ॥ ४ ॥ न याति च स तेजस्वी मध्येन नभसः कथं ।
एतदिच्छामि विज्ञातुं निखिलेन पितामह ॥ ५ ॥ भीष्म उवाच ॥ शृणु राजन्नवहितः सर्वमेतद् यथातथं । यथामति यथा चैतच्छ्रुतपूर्वं मयानघ
॥ ६ ॥ एष भार्गवदायादो मुनिर्मान्यो दृढव्रतः । सुराणां विप्रियकरो निमित्ते कारणात्मके ॥ ७ ॥ इन्द्रोऽथ धनदो राजा यक्षरक्षोऽधिपस्तदा । प्र
भविष्णुश्च कोशस्य जगतश्च तथा प्रभुः ॥ ८ ॥ तस्यात्मानमथाविश्य योगसिद्धो महामुनिः । रुद्ध्वा धनपतिं देवं योगेन हृतवान्वसु ॥ ९ ॥ हृ
ते धने ततः शर्म न लेभे धनदस्तथा । आपन्नमन्युः संविग्नः सोऽभ्यगात्सुरसत्तमं ॥ १० ॥ निवेदयामास तदा शिवायामिततेजसे । देव
श्रेष्ठाय रुद्राय सौम्याय बहुरूपिणे ॥ ११ ॥

तामभ्युपेत्याश्रमं प्रविशन्ति तं च देवाः प्रवेष्टुमशक्नुवन्तः विष्णुं शरणमीयुः ततो विष्णुश्चक्रेणाभ्युपेत्याः शिरश्चिच्छेद ततो हतावशिष्टाश्च सुरास्तु तं शुक्रं शर
णमीयुः स च मातृवधखिन्नो ऽसुरेभ्यो ऽभयं दत्त्वा देवानबाधत इति ॥ ७ ॥ इन्द्रो जगतः प्रभुः धनदः तदीयको स प्रभुरित्यन्वयः ॥ ८ ॥ तस्य धनदस्य आत्मानं शरीरं ॥ ९ ॥
आपन्नमन्युः प्राप्तदैन्यः ॥ १० ॥

१३ बभौ चात्मानं दर्शितवान् १४ महायोगिनः शिवस्य प्रभुः योगसिद्धः शुक्रः १५ सः शुक्रः धनुर्विना रुद्रेण शूलं शुक्र उपेतं शूलस्थं शूलं च योऽक्रमत शक्तमिति तम
वशूलं धनुः पंकर्तुं पाशिना समनामयत् संनामितवान् १७ शूलमेव पिनाकपदेन च वाच यतः पाशिना च नामयत् च तः पिनाकं तेन चाद्यपदस्य चाद्यं तु

योगात्मकेनोशनसा रुद्धाप महत्तं वपु योगेनात्मगतं कृत्वा निःसृतश्च महातपाः १२ एतच्छ्रुत्वा ततः क्रुद्धो महा[illegible] योगी महेश्वरः सं
रक्तनयनो राजन् शूलमादाय तस्थिवान् १३ कासौ क्वासाविति प्राह गृहीत्वा परमायुधं उशना रुद्रतत्र सव भौ ज्ञात्वा चिकीर्षितं १४
स महायोगिनो बुद्ध्वा तं रोषं वै महात्मनः गतिमागमनं वेत्ति स्थानं चैव ततः प्रभुः १५ संचिंत्योग्रेण तपसा महात्मानं महेश्वरं उ
शना योगसिद्धात्मा शूलाग्रे प्रत्यदृश्यत १६ विज्ञातरूपः स तदा तपःसिद्धो यथ धन्विना ज्ञात्वा शूलं समुदेवेशः पाशिना समनामयत्
१७ आनतेनाथ शूलेन पाशिनामिततेजसा पिनाकमिति चोवाच शूलमुग्रायुधः प्रभुः १८ पाशिमध्यगतं दृष्ट्वा भार्गवं तमुमापतिः
आस्यं विवृत्य ककुदी पाशिनाम्यक्षिपच्छनैः १९ स तु प्रविष्ट उशना कोष्ठं माहेश्वरं प्रभुः व्यचरच्चापि तत्रासौ महात्मा भृगुनंदनः २०

वर्णो भांद्वितीयस्य समध्यमाभ्यां कवर्गस्य युक्ताभ्यां पिनाकपदं निष्पन्नमिति योगप्रदर्शनं कृतं १८ पाणिमध्यगतो धनुः पाणिवेष्टुनशक्यः इति मत्वा ककुदी देवा
नोपदाधिपतिः रुद्रः प्राक्षिपत् ग्रासे १९ कोष्ठं उदरं २०

ब्यरदेवनतुचत्रवतजीर्णतांगतः किंवनाहृशं स्वकार्षीत्नपरन्तिशेषः २४ वृद्धिंसुक्रस्योत्कर्षं तत्संयोगेनतपोयोगेन २५ सःशुक्रः २६ निलिल्ये ञितरांगतिं

युधिष्ठिरउवाच किमर्थमभवद्व्यग्रउशनातस्यधीमतः जनार्देवदेवस्यकिंचाकार्षीन्महाद्युतिः २१ भीष्मउवाच पुराणोतर्जलगतः स्था
णुभूतोमहाव्रतः वर्षाणामभवद्राजनूप्रयुतान्यर्बुदानिच २२ उदतिष्ठत्तपस्तप्त्वादुश्चरंचमहाह्रदात् ततोदेवातिदेवस्तंब्रह्मावै
समतर्पयत् २३ तपोवृद्धिमपृच्छच्चकुशलंचैवमव्ययः तपःसुचीर्णमितिचप्रोवाचवृषभध्वजः २४ तत्संयोगेनवृद्धिंचाप्यपश्य
त्तनुशंकरः महामतिरचिंत्यात्माद्धत्यधर्मेरतस्सदा २५ ततेनाद्योमहायोगीतपसाचधनेनच अशोभतमहाराजत्रिषुलोकेषुवी
र्यवान् २६ ततःपिनाकीयोगात्माध्यानयोगंसमाविशत् उशनात्तुसमुद्विग्नोनिलिल्येजठरेततः २७ तुष्टावचमहायोगीदेवंतत्रस्थ
एवच निःसारंकांक्षमाणःस्तेतस्यप्रतिहृन्यते २८ उशनात्तुतपोवाचजठरस्थोमहामुनिः प्रसादंमेकुरुष्वेतिपुनःपुनरारिंदम
२९ तमुवाचमहादेवोगच्छशिश्नेनमोक्षणं इतिसर्वाणिस्रोतांसिरुध्वात्रिदशपुंगवः ३० अपश्यमानस्तद्वारंसर्वतःपि
हितोमुनिः पर्यक्रामद्दह्यमानइतस्ततस्तेजसा ३१

जगामावस्थामेत्यर्थः निःसारनिर्गमं नेवरुद्रेण २८ २९ ३० ३१ ३१ ३१